सौपर्णेयो[५] वैनतेयः[६] सुपर्णः[७]
सर्पारातिर्[८] वज्रजिद्[९] हव्यतुण्डः[१०]।
पक्षिस्वामी[११] काश्यपिः[१२] स्वर्णकाय[१३]
स्तार्क्ष्यः[१४] कामायु[१५] र्गरुत्मान्[१६] सुधाहृत्[१७] ॥१४५॥
बुद्धः[१] स्तु सुगतो[२] धर्म्मधातु[३] स्त्रिकालवि[४] ज्जिनः[५]।
बोधिसत्त्वो[६] महाबोधि[७] रार्य्यः[८] शास्ता[९] तथागतः[१०] ॥१४६॥
पञ्चज्ञानः[११] षडभिज्ञो[१२] दशार्हो[१३] दशभूमिगः[१४]।
चतुस्त्रिंशज्जातकज्ञो[१५] दशपारमिताधरः[१६] ॥१४७॥
द्वादशाक्षो[१७] दशबल[१८] स्त्रिकायः[१९] श्रीघना[२०]-द्वयौ[२१]।
समन्तभद्रः[२२] सङ्गुप्तो[२३] दयाकूर्च्चो[२४] विनायकः[२५] ॥१४८॥
(१)मार-लोक-स्व-जि[२८] द्धर्म्मराजो[२९] विज्ञानमातृकः[३०]।
महामैत्रो[३१] मुनीन्द्र[३२] श्च बुद्धाः(२) स्युः सप्त ते त्वमी ॥१४९॥
(३)विपश्यी[१] शिखी[२] विश्वभूः[३] क्रकुच्छन्द[४] श्च काञ्चनः[५]।
काश्यप[६] श्च सप्तम स्तु शाक्यसिंहो[१] ऽर्क्कबान्धवः[२] ॥१५०॥
तथा राहुलसूः[३] सर्व्वार्थसिद्धो[४] गौतमान्वयः[५]।
माया-शुद्धोदन-सुतो[७] देवदत्ताग्रज[८] श्च सः(४) ॥१५१॥
(५)असुरा[१] दिति-दनु-जाः[२] पातालौकः[४]-सुरारयः[५]।
पूर्व्वदेवाः[६] शुक्रशिष्या[७] विद्यादेव्य स्तु षोडश(६) ॥१५२॥

(१) मारजित्१ लोकजित्२ स्वजित् इति।

(२) द्वात्रिंशत् सामान्यतो बुद्धनामानि॥

(३) विपश्यीदश्विवत्, एतानि तद्भेदान्येव षट्॥

(४) सप्तमशाक्यसिंह बुद्धविशेषस्य नामान्यष्टौ॥

(५) दितिजाः१ दनुजाः२ इति॥

(६) विद्यादेवीनामेकैकम्। रोहिणी च प्रज्ञप्तिश्चेति वस्तु द्विवचनान्तं, न चात्र प्रज्ञप्तिशब्दोऽकारान्तो नदीवदिति भणितव्यम्, शान्ति-

रोहिणी[१]-प्रज्ञप्ती[२] वज्रशृङ्खला[३] कुलिशाङ्कुशा[४] ।
चक्रेश्वरी[५] नरदत्ता[६] काल्य[७]था सौ महापरा[८] [(१)] ॥१५३॥
गौरी[९] गान्धारी[१०] सर्वास्त्रमहाज्वाला[११] च मानवी[१२] ।
वैरोट्या[१३]ऽच्छुप्ता[१४] मानसी[१५] महामानसिके[१६]ति ताः॥१५
वाग् ब्राह्मी[२] भारती[३] गौ[४]र्गी[५] र्वाणी[६] भाषा[७] सरस्वती[८]
श्रुतदेवी[९] वचनं[१] तु व्याहारो[२] भाषितं[३] वचः[४] ॥१५५॥
(२)सविशेषण माख्यातं वाक्यं[१] स्याद्यन्तकं पदम्[१] ।
राद्ध-सिद्ध-कृतेभ्योऽन्त[(३)] आप्तोक्तिः[४] समया[५]ऽऽगमौ[६,(४)] ॥१५
(५)आचाराङ्गं[१] सूत्रकृतं[२] स्थानाङ्गं[३] समवाय[४]-युक् ।
पञ्चमं भगवत्यङ्गं[५] ज्ञाता धर्मकथा[६]ऽपि च ॥१५७॥

---

ह्रेतिजूर्तिसातिकीर्ति इत्यनेन सूत्रेण क्ति प्रत्ययेन निपातितत्वात्, पाणिनिमातक्ति प्रत्यये नितां स्वस्य इतीत्वं बाधितत्वात्, क्ति प्रत्ययस्य इतोऽक्त्यर्थादिति सूत्रेण ङी प्रत्ययस्य निषेधनात् ॥

(१) महाकाली इत्येवम् ॥

(२) प्रयुज्यमानाख्याताऽप्रयुज्यमानाख्यातयो र्नामैकं वाक्यम् । स्याद्यन्तं पदं सामान्यत आख्यातं कथ्यते, यदनेकार्थः "आख्यातं भाषितेत्यादौ" इत्यादि स्याद्यन्तं पदमिति तट्टीका, तदाख्यातं प्रयुज्यमानमप्रयुज्यमानं वा सविशेषणं प्रयुज्यमानैरप्रयुज्यमानैर्वा कर्त्रादिभिर्विशेषणैः सहितं वाक्यमुच्यते इति शेषः, प्रयुज्यमान माख्यातं यथा धर्मो वो रक्षतु, अप्रयुज्यमानाख्यातं यथा शीलं तेस्वम्, अस्तीति गम्यते, तिङ् सुबन्तचयो वाक्यमित्यमरः सूत्रसिद्ध क्ती सावाद्दी शेषान्ते स्यादयः आदिशब्दः प्रत्येकं योज्यते, तेन स्यादयः सुपर्यन्ताः त्यादयः स्तामहिपर्यन्ता स्तदन्ते, यस्य तत् स्याद्यन्तकम् तस्य नामैकं पदमिति ॥

(३) राद्धान्तः१ सिद्धान्तः२ कृतान्त इति ॥

(४) सामान्यतः सिद्धान्त-शास्त्रनामानि षट् ॥

(५) अङ्गनामैकैकम् ॥

(१)उपासका-न्तकृ-दनुत्तरोपपातिका दशाः[९]।
प्रश्नव्याकरणं[१०] चैव विपाकश्रुत[११] मेव च ॥१५८॥
(१)इत्येकादश सोपाङ्गान्य ङ्गानि[१] द्वादशं पुनः(२)।
दृष्टिवादो[२] द्वादशाङ्गी[१] स्या द्गणिपिटका[२] तथा(३) ॥१५९॥
(४)परिकर्म्म[१]-सूत्र[२]-पूर्वानुयोग[३]-पूर्वगत[४]-चूलिकाः[५] पञ्च।
स्यु र्दृष्टिवादभेदाः पूर्वाणि[१] (५)चतुर्दशापि पूर्वगते ॥१६०॥
(६)उत्पाद[१] पूर्वमग्रायणीय[२] मथ वीर्य्य(८)तः प्रवादं[३] स्यात्(७)
अस्ति ज्ञाना त्मत्या त्सदा त्मनः कर्म्मणश्च परम् ॥१६१॥
प्रत्याख्यानं[९] विद्याप्रवाद[१०]-कल्याण[११]-नामधेये च।
प्राणावायं[१२] च क्रियाविशाल[१३] मथ लोकबिन्दुसार[१४]मिति॥
स्वाध्यायः[१] श्रुति[२] राम्नाय[३] श्छन्दो[४] वेद[५] स्त्रयी[६] पुनः।
ऋग्यजुः सामवेदाः स्यु रथर्वा तु तदुद्धृतिः ॥१६२॥

---

(१) उपासकाश्च अन्तकृतश्च अनुत्तरोपपातिकाश्चेति समाहारद्वन्द्वः, तस्मात् दशा इति प्रत्येकं योज्यते, तेन उपासकदशाः१अन्तकृद्दशाः२अनुत्तरोपपातिकदशाः३इति, एषां त्रयाणां ग्रन्थानां नाम बहुवचनान्तम्॥

(२) इत्येकादशप्रवचनपुरुषस्य अङ्गानी वाङ्गानि, किं भूतानि ! सह उपाङ्गैरौपपातिकादिभि र्द्वादशभि र्वर्त्तन्ते यानि तानि सोपाङ्गानि॥

(३) द्वादशाङ्गस्य॥ (४) द्वादशाङ्गाः॥

(५) दृष्टिवादभेदानामेकैकम्॥

(६) वक्ष्यमाणानि चतुर्दश पूर्वगते पूर्वाणीत्युच्यन्ते॥

(७) पूर्वदृष्टिवादभेदानामेकैकम्॥

(८) वीर्य्यतः वीर्य्यशब्दात् प्रवादं वीर्य्यप्रवादम्१ तदिति प्रवादमस्त्यादिभ्यः परं योज्यम् ‘अस्तीति नास्तेरप्युपलक्षणम् ततः अस्तिनास्तिप्रवादम्२ ज्ञानप्रवादम्३ सत्यप्रवादम्४ आत्मप्रवादम्५ कर्मप्रवादम्६ प्रत्याख्यानप्रवादम्७॥

वेदान्तः[१] स्या दुपनिषदो[२] ङ्कार[२]-प्रणवौ[२] समौ ।
(१)शिक्षा[१] कल्पो[२] व्याकरणं[२] छन्दो[४]-ज्योति[५]-र्निरुक्तयः[६] ॥
षडङ्गानि[१] धर्मशास्त्रं[१] स्यात् स्मृति[२] र्धर्मसंहिता[२] ।
आन्वीक्षिकी[१] तर्कविद्या[२] मीमांसा[१] तु विचारणा[२] ॥१६५॥
सर्ग[१] श्च प्रतिसर्ग[२] श्च वंशो[३] मन्वन्तराणि च[४] ।
वंशानुवंशचरितं[५] पुराणं[१] पञ्चलक्षणम् ॥१६६॥
षडङ्गी[६] वेदा श्चत्वारो[४] मीमांसा[१] ऽन्वीक्षिकी[१] तथा ।
धर्मशास्त्रं[१] पुराणं[१] च विद्या एता श्चतुर्दश ॥१६७॥
(२)सूत्रं[१] सूचनकृ द्भाष्यं[१] सूक्तोक्तार्थ प्रपञ्चकम् ।
प्रस्ताव[१] स्तु प्रकरणं[२] (३)निरुक्तं[१] पदभञ्जनम् ॥१६८॥
अवान्तरप्रकरणविश्रामे[(४)] शीघ्रपाठतः ।
आह्निक[१] मधिकरणं[१] (५)न्वेकन्यायोपपादनम् ॥१६९॥
उक्तानुक्तदुरुक्तार्थचिन्ताकारि तु वार्त्तिकम्[१(६)] ।

---

(१). एकैकं तत्तद्वाक्यं ज्ञेयम् ॥

(२) सूत्रं क्लीबे, पुंस्यपीति कश्चित् ॥

(३) "शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरस्थितम् आहुः । प्रक
नाम शास्त्रभेदं विपश्चितः" ॥

(४) अवान्तरप्रकरणानां विश्रामो ग्रन्थावयव इत्यर्थः, तदाह्नि
मित्युच्यते यदनेकार्थः "आह्निकं स्यात् पुनरह्निर्वर्त्ये नित्यकर्मणि ।
जने ग्रन्थभागे चेति" ग्रन्थभागे ग्रन्थावयवे इति तट्टीका ।

(५) एकं न्याय मुपपादतीति अधिकार इति यावत्, तस्य न
अधिकरणमिति ॥

(७) उक्तानामनुक्तानां दुरुक्तानां चार्थानां चिन्ता यत्र क
[illegible] ग्रन्थस्य नाम वार्त्तिकम् ॥

टीका[1] निरन्तरव्याख्या(1) पञ्जिका[1] पदभञ्जिका(2) ॥१७०॥
निबन्ध[1]-वृत्ती[2] ग्रन्थार्थे(3) संग्रह[1]स्तु समाहृतिः[2] ।
(4)परिशिष्ट[1]-पद्धत्या[2]-दीन् यथा ऽनेन समुन्नयेत् ॥१७१॥
कारिका[1] तु स्वल्पवृत्तौ बहोरर्थस्य सूचनम् ।
कलिन्दिका[1] सर्व्वविद्या(5) निघण्टु[1] र्नामसंग्रहः[2] ॥१७२॥
इतिहासः[1] पुरावृत्तं(6) प्रवह्लिका[1] प्रहेलिका[2] ।
जनश्रुतिः[1] किंवदन्ती[2] वार्त्तैतिह्यं[1] पुरातनी ॥१७३॥
वार्त्ता[1] प्रवृत्ति[2] र्वृत्तान्त[3] उदन्तो[4] ऽथा ह्वयो[1] ऽभिधा[2] ।
गोत्र[3]-संज्ञा[4]-नामधेया[5]-ऽऽख्या[6]-ऽऽह्वा[7]-ऽभिख्या[8]श्च नाम च॥
सम्बोधन[1]मामन्त्रण[2]माह्वानं[1] त्वभिमन्त्रणम् ।
आकारणा[3] हवो[4] हूतिः[5] संहूति[1] र्बहुभिः कृता ॥१७५॥
उदाहार[1] उपोद्घात[2] उपन्यास[3] श्च वाङ्मुखम्[4] ।
व्यवहारो[1] विवादः[2] स्यात् शपथः[1] शपनं[2] शपः[3] ॥१७६॥

---

(1) सुगमानां विषमाणाञ्चार्थानां निरन्तरम् अन्तराभवेनाविच्छेदेन व्याख्या "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्" इत्युक्ता पञ्चलक्षणान्विता यस्यां सा निरन्तर व्याख्या, एवम्विधो यो ग्रन्थ स्तस्य नामैकं टीका ॥

(2) विषमाण्येव पदानि अर्थांश्च भनक्ति व्याख्यातीति पदभञ्जिका-तद्विध ग्रन्थस्य नामैकं पञ्जिका ।

(3) अनुगतो निबद्धोऽर्थो यस्मिन्नर्थे ॥

(4) एकैकं ज्ञेयम्, अपि च, अनेन यथा ग्रन्थ मार्गेणैव परिशिष्टञ्च परिशिष्ट पद्धती द्वे आदौ येषां तथा नाम समुन्नयेत् जानीयात् आदिपदग्रहणात् अध्यायः उच्छ्वासः अङ्कः सर्गः इत्यादयो ग्रन्थावयवविशेषा ज्ञेयाः ।

(5) अकारान्तोऽप्ययम् पुं ॥

(6) पूर्व्वचरितमित्यर्थः ॥

आक्रोशा[1]-भीषङ्गा[2]-शपाः[3] शापः[4] स आरवो[1] रवे।
विरुद्धशंसनं गालि(1)राशी[1] र्मङ्गलशंसनम् ॥१८६॥
श्लोकः[1] कीर्त्ति[2] र्यशो[3] ऽभिख्या[4] समाज्ञा[5] स्तुती[1] नुतः(2)।
अशुभावाक् शुभा कल्या[1] चर्चरी[1] चर्भटी[2] समे(3) ॥१८७॥
यः सनिन्द उपालम्भ स्तत्र स्यात्परिभाषणम्[1]।
आपृच्छा[1] ऽऽलापः[2] सम्भाषो[1] ऽनुलापः[1] स्या न्मुहुर्वचः ॥१८८॥
अनर्थकं तु प्रलापो[1] विलापः[1] परिदेवनम्[2]।
उल्लापः(4) काकुवागन्योन्योक्तिः(5) संलाप[1]-सङ्कथे[2] ॥१८९॥
विप्रलापो[1] विरुद्धोक्ति रपलाप[1] स्तु निह्नवः।
सुप्रलापः[1] सुवचनं सन्देशवा क्तु वाचिकम् ॥१९०॥
आज्ञा[1] शिष्टि[2] र्नि-राङ्-नि-भ्यो(6) देशो[5] नियोग[6]-शासने[7]
अववादो[8] ऽप्यथा ह्वयप्रेषणं(7) प्रतिशासनम् ।१९१॥
संवि[1]त्सन्धा[2]ऽऽस्था[3]ऽभ्युपायः[4] सं-प्रत्या-ङ्-भ्यः परः श्रवः[7](8)
अङ्गीकारो[8] ऽभ्युपगमः[9] प्रतिज्ञा[10] ऽऽगू[11] श्च सङ्गरः[12] ॥१९२

(१) गालिः स्त्रीलिङ्गं, तथा आशीरपि, आशीः आशिषौ आशिषः इति रूपम् ॥

(२) नमथा इति वा पाठः, स्तुती स्वप्रत्ययान्तः वाच्यलिङ्गोऽयम् ॥

(३) [illegible] वचसो नामनी द्वे।

(४) काक्वा वचनं काकुवाक्, शोकभयादिभिः शोभितकण्ठे ध्वनिः काकुः, यदमर आह, "काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेरिति" शोकभयादिभिः शोभितकण्ठस्य वाक्यमुल्लाप इति ॥

(५) अन्योन्येन उक्तिर्भाषणम् ॥

(६) निराङ् निभ्य उपसर्गेभ्योऽपरे देशः, निर्देशः१ आदेशः२ निदेशः॥

(७) आहूय आकार्य यत्प्रेषणं मोचनम् ॥

(८) संप्रत्याङ्भ्य उपसर्गेभ्यः परोऽपि श्रवः, तेन संश्रवः१ प्रतिश्रवः२ आश्रवश्च ॥

गीत-नृत्य-वाद्य-त्रयं(१) नाट्यं[१] तौर्य्यत्रिकं[२] च तत् ।
सङ्गीतं प्रेक्षणार्थेऽस्मिन् शास्त्रोक्ते नाट्यधर्म्मिका[१](२) ॥१९३॥
गीतं[१] गानं[२] गेयं[३] गीति[४] र्गान्धर्व्व[५] मथ नर्त्तनम् ।
नटनं[२] नृत्यं[३] नृत्तं[४] च लास्यं[५] नाट्यं[६] च ताण्डवम्[७] ॥१९४॥
मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीसकं[१] हि तत्(३) ।
पानगोष्ठ्यां सुरतालं[१] रणे वीरजयन्तिका[१] ॥१९५॥
स्थानं नाट्यस्य रङ्गः[१] स्यात् पूर्व्वरङ्गः उपक्रमः[१] ।
अङ्गहारो[१]ऽङ्गविक्षेपो व्यञ्जको[१]ऽभिनयः[२] समौ(४) ॥१९६॥
स चतुर्व्विध आहार्य्यो[१] रचितो भूषणादिना ।
वचसा वाचिको[१]ऽङ्गेनाङ्गिकः[१] सत्त्वेन सात्त्विकः[१] ॥१९७॥
स्यु र्नाटकं[१] प्रकरणं[२] भाणः[३] प्रहसनं[४] डिमः[५] ।
व्यायोग[६]-समवकारौ[७] वीथ्य[८]-ङ्के[९]-हामृगा[१०] इति(५) ॥१९८॥
अभिनेयप्रकाराः स्यु र्भाषाः षट् संस्कृतादिकाः(६) ।
भारती[१] सात्वती[२] कैशिक्या[३]-रभट्यौ[४] च वृत्तयः[१](७) ॥१९९॥

---

(१) भरतादि शास्त्रनिर्दिष्टं गीत-नृत्य-वाद्य-त्रयं तन्नामैकं तौर्य्यत्रिकमिति ॥

(२) अस्मिन्निति भरतादि शास्त्र इत्यर्थः, नाट्यधर्म्मी इति प्राथमिक-मपम् अत्र स्वार्थे कः नाट्यधर्म्मिका स्त्रीलिङ्गः, सभ्यानां प्रेक्षणार्थं प्रारब्धस्य तौर्य्यत्रिकस्यैव नाम ॥

(३) क्ली, वाचस्पतिस्तु हल्लीसकोऽस्त्रियामित्याह ॥

(४) हस्तादिभिः कृताभिनयस्य ।

(५) रूपकप्रबन्धभेदानामेतेषां । आभाषः समवाकारौ इति वा पाठः ॥

(६) संस्कृत१ प्राकृत२ मागधी३ शौरसेनी४ पैशाची५ अपभ्रंश६ इत्येताः षड्भाषा उच्यन्ते ॥

(७) भारत्यादीनां वृत्तत्वं ॥

वाद्यं[1] वादित्र[2] मातोद्यं[2] तूर्य[4] (1) तूर[4] स्वारध्वनः[1] ।
ततं[1] वीणाप्रभृतिकं तालप्रभृतिकं घनम्[1] ॥२०॥
वंशादिकन्तु शुषिरं[1] मानद्धं[1] मुरजादिकम् ।
वीणा[1] पुनर्वैपवती[2] विपञ्ची[2] कण्ठकूणिका ॥२१॥
वल्लकी[4] सा ऽथ तन्त्रीभिः सप्तभिः परिवादिनी[1] ।
शिवस्य वीणा ऽनालम्बी[1] सरस्वत्या स्तु कच्छपी[1] ॥२२॥
नारदस्य तु महती[1] गणानां तु प्रभावती[1] ।
विश्वावसो स्तु वृहती[1] तुम्बुरो स्तु कलावती[1] ॥२३॥
चण्डालानां तु कटोल (2) वीणा[1] चाण्डालिका[2] च सा ।
कायः कोलम्बक[1] स्तस्या उपनाहो निबन्धनम् ॥२४॥
दण्डः पुनः प्रबालः[1] स्या त्ककुभ[1] स्तु प्रसेवकः[2] ।
मूले वंशशलाका स्यात् कलिका कूणिका[2] ऽपि च ॥२५॥
कालस्य क्रियया मानं तालः साम्यं पुन र्लयः (3) ।
द्रुतं विलम्बितं मध्य मोघ स्तत्वं[2] घनं क्रमात् ॥२६॥
मृदङ्गो[1] मुरजः[2] सोऽङ्क्यो[1] (4) ऽलिङ्ग्य[2] ऊर्ध्वक[2] इति त्रिधा ।
स्या द्यशः पटहो[1] ढक्का[2] (5) भेरी[1] दुन्दुभि[2] रानकः[1] ॥२७॥

---

(1) तूर्यमिति पुंक्लो ॥ (2) कण्डोल इति वा पाठः ।

(3) द्रुतादि त्रयाणामेकैकम् ॥

(4) अङ्क्यो अङ्क्यौ अङ्क्याः, आलिङ्ग्यो आलिङ्ग्यौ द्वाविमप्रत्ययान्तौ आलिङ्ग्यस्य ॥

(5) तथा च रत्नोदयः "सार्द्धहस्तत्रयं मानं भेरीणां समुदाहृतम् । पिण्डे चतुरङ्गुला प्रोक्ता वादयेन्मुखयोर्द्वयोः ।। करिरे भङ्गिरे भङ्गरङ्गिरे अंघिरे घङ्गिने भुभुसे । पञ्चतालेषु भेरीबुधैः प्रोच्यते" वार्त्तिकास्तु भेरीदण्डयोः संयोगः यदि भेरी दण्डाभ्यां भिन्न इत्यत

७

पटहो⁴ ऽथ शारिका² स्यात्कोणो¹ ⁽¹⁾वीणादिवादनम्।
⁽²⁾शृङ्गार¹-हास्य²-करुणा³ रौद्र⁴-वीर⁵-भयानकाः⁶ ॥२०८
बीभत्सा⁷ऽद्भुत⁸-शान्ताश्च रसा¹ भावाः¹ पुनस्त्रिधा।
स्थायि¹-सात्त्विक²-सञ्चारि³-प्रभेदैः स्याद्रतिः¹ पुनः ॥२०९
रागो² ऽनुरागो³ ऽनुरति⁴ र्हासि¹ स्तु हसनं² हसः³।
घर्घरो⁴ हासिका⁵ हास्यं⁶ तत्र हृष्टरदे स्मितम्¹ ॥२१०॥
वक्रोष्ठिका² ऽथ हसितं¹ किञ्चिद् दृष्टरदाङ्कुरे⁽³⁾।
किञ्चिच्छब्दे विहसितं¹ मट्टहासो¹ महीयसि ॥२११॥
अतिहासा¹ स्त्वनुस्यूते ⁽⁴⁾ऽपहासो¹ ऽकारणात् कृते।
सोत्प्रासे त्वां च्छुरितकं¹ हसनं¹ स्फुरदोष्ठके⁽⁵⁾ ॥२१२॥
शोकः¹ शुक्⁽⁶⁾ शोचनं² खेदः⁴ क्रोधो¹ मन्युः² क्रुधा³ रुषा⁴।
क्रुत्⁵ कोपः प्रतिघो⁷ रोषो⁸ रुट्⁹ चो त्साहः¹ प्रगल्भता²॥
अभियोगो³⁽⁷⁾-द्यमौ⁴ प्रौढि⁵ रुद्योगः⁶ कियदेतिका⁷।
अध्यवसाय⁸ ऊर्जो⁹ ऽथ वीर्य्यं¹ सो ऽतिशयान्वितः ॥२१४॥

---

भेरीशब्देन "दमदमा" इति लोकप्रसिद्धस्य नाम इत्याहुः, अपरे तु आद्ये द्वे भेरीनाम्नी इत्याहुः। भेरी स्त्री, दुन्दुभी पुं, आनकोऽपि पुं, भिःपटहः पुंक्ली।

(१) कोणः पुं, द्वयोस्तु कोण इति वाचस्पतिः।

(२) शृङ्गारशब्दस्तु पुंक्ली। हास्यादयस्तु पुंलिङ्गाः।

(३) किञ्चित् लोकत्वात् दृष्टा विलोकिता रदाः दन्ता एव अङ्कुरा यस्मिन् स किञ्चिद्दृष्टरदाङ्कुरः तस्मिन् एवंविधे हासे इत्यर्थः।

(४) निरन्तर इत्यर्थः।

(५) स्फुरत् चलत् ओष्ठो यस्मिन् स तथा तस्मिन् स्फुरदोष्ठके हासे

(६) शुक् स्त्री, मन्युः पुं, क्रुत् स्त्री, रुट् स्त्री।

(७) पुंक्ली अयौ।

भयं[1] भी[2] र्भीति[3] रातङ्क[4] आशङ्का[5] साध्वसं[6] दरः[7] ।
भियाच[8](1) त त्वादिभयं[1] भूपतीनां स्वपक्षजम् ॥२१५॥
अदृष्टं[1] वह्नितोयादे र्दृष्टं[1] स्वपरचक्रजम् ।
भयङ्करं[1] प्रतिभयं[2] भीमं[3] भीष्मं[4] भयानकम्[5] ॥२१६॥
भीषणं[6] भैरवं[7] घोरं[8] दारुणं[9] च भयावहम् ।
जुगुप्सा[1] तु घृणा[2]ऽथ स्या द्विस्मय[1]श्चित्र[2] मद्भुतम्[3] ॥२१७॥
चोद्यं[4](2)-आश्चर्य्यं[5] शमः[1] शान्तिः[2] शमथो[3]-पशमा[4] वपि ।
तृष्णाक्षयः[5] स्थायिनोऽमी रसानां कारणं क्रमात् ॥२१८॥
स्तम्भो[1] जाड्यं[2] स्वेदो[1] घर्म्मो[2] निदाघो[3] पुलकः[1] पुनः(3) ।
रोमाञ्चः[2] कण्टको[3] रोमविकारो[4] रोमहर्षणम् ॥२१९॥
रोमोद्गम[6] उद्धुषण[7](4) मुल्लकसन[8] मित्य पि ।
स्वरभेद[1] स्तु कल्लत्वं स्वरे कम्प[1] स्तु (5)वेपथुः[2] ॥२२०॥
वैवर्ण्यं[1] कालिका[2]ऽथा श्रु[1] वाष्पो[2] नेत्राम्बु[3] रोदनम्[4] ।
अस्र[5] मन्यु[6](6) प्रलय[1] स्त्वचेष्टते त्यष्टसात्त्विकाः ॥२२१॥
धृतिः[1] सन्तोषः[2] स्वास्थ्यं[3] स्या दाध्यानं[1] स्मरणं[2] स्मृतिः[3] ।
मति[1] र्मनीषा[2] बुद्धि[3] र्धी[4] र्धिषणा[5]-ज्ञप्ति[6]-चेतनाः[7] ॥२२२॥
प्रतिभा[8]-प्रतिप[9]त्प्रज्ञा[10]-प्रेक्षा[11]-चिदु[12]-पलब्धयः[13] ।
संवित्तिः[14] शेमुषी[15] दृष्टिः[16](7) सा मेधा[1] धारणक्षमा ॥२२३॥

---

(१) भीतिः स्त्री, दरः पुंक्लो, भिया इति तु अङ्प्रत्ययान्तत्वादाबन्तः ।
(२) चोद्यं इति वा पाठः ।
(३) पुलकः पुंक्लो, कण्टकोपि पुंक्लो ।
(४) उद्धर्षण इति वा उल्लसनक इति वा पाठः ।
(५) स्वरकम्प इत्येकं वा नाम, वेपथुः पुं ।
(६) अस्रं क्लो, अस्त्रु इति वा पाठः । वाष्पः पुंक्लो, ।
(७) चित् स्त्री, सा मति धारणक्षमा धारणसमर्था मेधा इत्युच्यते ।

प्रज्ञा[१] तत्रानुगा मोक्षे ज्ञानं[१] विज्ञान[१] मन्यतः(१) ।
शुश्रूषा[१] श्रवणं[२] चैव ग्रहणं[३] धारणं[४] तथा ॥२२४॥
ऊहो[५]ऽपोहो[६]ऽर्थविज्ञानं[७] तत्त्वज्ञानं[८] च धीगुणाः ॥
(२)व्रीडा[१] लज्जा[२] मन्दाक्षं[३] ह्री[४]स्त्रपा[५] सा ऽपत्रपा[६]ऽन्यतः ॥२२५॥
जाड्यं[१] मौर्ख्यं[२] विषादो[१]ऽवसादः[२] सादो[३] विषण्णता[४] ।
मदो[१] मुन्मोहसम्भेदो(३) व्याधिस्त्वाधी रुजाकरः ॥२२६॥
निद्रा[१] प्रमीला[२] शयनं[३] संवेश[४]-स्वाप[५]-संलयाः[६] ।
(४)नन्दीमुखी[७] श्वासहेति[८]स्तन्द्रा[९] सुप्तं[१] तु साऽधिका ॥२२७॥
औत्सुक्य[१] रणरणको[२]-त्कण्ठे[३] आयल्लका[४]-ऽरती(५) ।
उल्लेखो[६]-त्कलिके[७] चाथावहित्था[१] (६)ऽकारगोपनम्[२](७) ॥
शङ्का[१]ऽनिष्टोत्प्रेक्षणं(८) स्याच्चापलं त्वनवस्थितिः[२] ।
आलस्यं[१] तन्द्रा[२] कौसीद्यं[३] हर्ष[१]श्चित्तप्रसन्नता[२] ॥२२८॥
ह्लादः[३] प्रमोदः[४] प्रमदो[५]-मु[६]-त्प्रीत्या[७]-मोद[८]-सम्मदाः[९] ।

---

'मतिरागामिका ज्ञेया बुद्धिस्तत्कालदर्शिनी । प्रज्ञा चातीतकालस्य मेधा कालत्रयात्मिका" इत्यन्ये भिदन्ति ।

(१) अन्यत इति मोक्षशास्त्रादन्यत्र शिल्पे चित्रादौ च या मतिर्निपुणायते तदेकं नाम विज्ञानम् ।

(२) चत्वारि स्त्रदस्येत्यन्ये, श्रीणीत्यन्ये, त्रीणि स्त्रीलिङ्गे ।

(३) तन्मते सम्भेदौ इति पाठः । आधिर्मनःपीडा व्याधिरुच्यते इत्यन्वयः ।

(४) "अविकारोऽद्रवं मूर्त्तं प्राणिस्थं स्वाङ्गमुच्यते" इति स्वाङ्गलक्षणात् ङीबदयम्, नन्दीमुखापि आबन्ता गङ्गावत् ।

(५) अरती स्त्री ।

(६) क्लीबेऽवहित्थं कुलवत्, वस्तुतस्तु स्त्रीलिङ्गी ।

(७) आकारस्य भ्रूविकार मुखरागादेर्गोपनम् आच्छादनम् ।

(८) अनिष्टस्योत्प्रेक्षणं सम्भावनमित्यर्थः ।

आनन्दो[१०]-नन्दथू[११](१) र्गर्व्व स्त्वहङ्कारो[२] ऽवलिप्तता[३] ॥२२०॥
दर्पो[४] ऽभिमानो[५](२) ममता[६] मान[७] श्चित्तोन्नतिः[८] स्मयः[९] ।
स मिथो ऽहमहमिका[१] या तु सम्भावना त्मनि(३) ॥२२१॥
दर्पा त्सा ऽऽहोपुरुषिका[१] स्या दहम्पूर्व्विका[१] पुनः(४) ।
अहं पूर्व्व महं पूर्व्वमित्य ग्रत्वं[१] तु चपलता[२] ॥२२२॥
प्रबोध[१] स्तु विनिद्रत्वं[२] ग्लानि(५) स्तु बलक्षीनता ।
दैन्यं[१] कार्पण्य[२] श्रम[१] स्तु क्लमः[२] क्लेशः[३] परिश्रमः[४] ॥२२३॥
प्रयासा[५]-यास[६]व्यायामा[७] उन्माद[१] श्चित्तविभ्रवः[२] ।
(६)मोहो[१] मौढ्यं[२] चिन्ता[१] ध्यान[२] ममर्षः[१] क्रोधसम्भवः॥२२४॥
गुणो जिगीषो[१] त्साहवां स्त्रास स्त्वाकस्मिकं भयम् ।
अपस्मारः[१] स्या दावेशो निर्वेदः[१] स्वावमाननम् ॥२२५॥
आवेग[१] स्तु त्वरि[२] स्तूर्णिः[३] संवेगः[४] सम्भ्रम[५] स्त्वरा[६] ।

---

(१) भुतमन्द्रः स्त्री, आनन्दथुः पुं ।

(२) अभिमानः पुंक्लो, वैजयन्तीकारस्तु "अभिमानस्त्वहङ्कारो गर्वो-ऽस्त्री" त्याह ।

(३) अहो अहं पुरुषः इति दर्पात् अहङ्कारात् या आत्मनि स्वविषये सम्भावना सा आहो पुरुषिका, "यत्र ह्यथाभिनिवेश स्ता माहो पुरुषिकां विदुः" यत्सौन्दर्य्यलहरी आह "पुरस्तादास्तां नः पुरमथितुराहो पुरुषिका"।

(४) अहं पूर्व्वं इति यस्यां क्रियायां पूर्व्वं भवते साऽहं पूर्व्विका ।

(५) ग्लानिः स्त्री ।

(६) मोहो मूर्च्छा अविद्या च यन्महेश्वरः "मोहमित्यपि मूर्च्छाया मविद्यायां च दृश्यते" इति । मूर्च्छायां यथा "अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता" अविद्या विपर्यय स्तत्र यथा "न मुह्यामः कामानहह गहनो मोहमहिमा" ।

वितर्क[1](1) स्यादुन्नयनं[2] परामर्शो[3] विमर्शनम् ॥२२६॥
अध्याहार[5] स्तर्क[6] ऊहो[7] ऽसूया[1] न्यगुणदूषणम् ।
मृतिः[1] संस्था[2](2) मृत्यु[3]-कालौ[4] परलोकगमो[5] ऽत्ययः[6] ॥२२७॥
पञ्चत्वं[7] निधनं[8] नाशो[9] दीर्घनिद्रा[10] निमीलनम् ।
दिष्टान्तो[11] ऽस्तं[12] कालधर्मो[13] ऽवसानं सा तु सर्वगा ॥२२८॥
(3)मरको[1] मारि[2] स्त्रयस्त्रिंश दमी व्यभिचारिणः ।
स्युः कारणानि कार्याणि सहचारीणि यानि च ॥२२९॥
रत्यादेः स्थायिनो लोके तानि चेत् काव्यनाट्ययोः ।
विभावा[1] अनुभावा[2] श्च व्यभिचारिण[3](4) एव च ॥२३०॥

---

(1) त्वरिः स्त्री, तूर्णिरपि स्त्री, वितर्कः पुं, वैजयन्ती कारस्तु "वितर्कं स्तर्कमस्त्रिया" मित्याह ।

(2) संस्थः संस्था इत्येवं स्त्रीपुं । संपूर्व्व स्थाधातो र्मरणार्थकत्वात् प्रमादाय प्रवृत्ति निमित्तता बोध्या । निधनं पुंक्ली ।

(3) मरकः पुंक्ली, मारिः स्त्री ।

(4) विविध माभिमुख्येन चरन्तीति व्यभिचारिणो भावा उच्यन्ते, स्याद् रतिः रागोऽनुरागोऽनुरतिरित्यादिनवविधस्य स्थायीभावस्य लोके यानि कारणानि कारणभूतानि आलम्बनोद्दीपनस्वभावानि ललनोद्यानादीनि स्युः तानि काव्यनाट्ययोः काव्ये नाट्ये च विभावा उच्यन्ते, रागादि नवविधस्थायिभावस्य कारणानाम् आलम्बनोद्दीपनस्वभावानां ललनोद्यानादीनां नाम काव्यशास्त्रे नाट्यशास्त्रे च विभाव इत्यर्थः । च पुनः एवं कार्याणि कार्यभूतानि कटाक्षभुजाक्षेपादीनि अनुभावा उच्यन्ते. रागादि नवविधस्थायिभावस्य कारणभूतानामालम्बनोद्दीपनस्वभावानां ललनादीनां कार्यभूतकटाक्षभुजाक्षेपादीनां नाम अनुभाव इत्यर्थः । व्यक्तः प्रकटः सभास्थितानां लोकानां वासनारूपेण स्थितः स स्थायी रसः शृङ्गारादि भवेत् विभावैः१ अनुभावैः२ सात्त्विकैः३ व्यभिचारिभिः४ चतुर्भिः स्थायी भावो रसः कथ्यत इत्यर्थः ।

व्यक्तः स तैर्विभावाद्यैः स्थायीभावो भवेद्रसः[1] ।
पात्राणि[1] नाट्येऽधिकृतास्तत्तद्वेषस्तु भूमिका[1] ॥२४१॥
शैलूषो[1] भरतः[2] सर्ववेशी[3(1)] भरतपुत्रकः[4] ।
धर्मीपुत्रो[5(2)] रङ्ग-जाया-जीवो[7] रङ्गावतारकः[8] ॥२४२॥
[(3)]नटः[9] कृशाश्वी[10] शैलाली[11] चारणस्तु[1] कुशीलवः[2] ।
भ्र-भ्रु-भ्रू-भ-परः कुंसो[4(4)] नटः स्त्रीवेषधारकः ॥२४३॥
वेश्याचार्यः[1] पीठमर्दः[2] सूत्रधारस्तु[1] सूचकः ।
नन्दी[1] तु पाठको नान्द्याः[(5)] पार्श्वस्थः[1] पारिपार्श्विकः[2] ॥
[(6)]वासन्तिकः[1] केलिकिलो[2] वैहासिको[3] विदूषकः[4] ।
प्रहासी[5] प्रीतिदश्[6]चाथ पिङ्गः[1] पल्लविको[2] विटः[3(7)] ॥२४५॥
पिता त्वावुक[1] आवुत्त[1]-भावुकौ[2] भगिनीपतौ ।

---

(१) सर्ववेशी इति पाठः ।

(२) धात्रीपुत्रः इति वा, रङ्गजायाभ्यामाजीवः, रङ्गाजीवः १ जायाजीवः २ ।

(३) नटः पुंलि, कृशाश्वीति इन्नन्तः शैलाली णिन्नन्तः ।

(४) भ्रकुंसः १ भ्रुकुंसः २ भ्रूकुंसः ३ भकुंसः ४ इति ।

(५) नान्द्याः पूर्वरङ्गाङ्गस्य द्वादशतूर्यघोषनाम्नः पाठकोऽध्यापको नन्दीत्युच्यते, नन्दिनौ नन्दिन इत्यादि रूपाणि । नन्दशब्दात् प्रज्ञाद्यणि नान्दी स्त्रीलिङ्गः, नान्द्यौ नान्द्य इति । भम्भा१ मउंद२ मद्दल३ कडम्ब४ झल्लरि५ हुडुक्क६ कंसाल७ काहल८ तिलिमा९ वंसो१० सङ्खो११ पणवो१२ यनाडए१२ नन्दी१ इति नाटकनान्दीयम् । ढक्का१ ढक्का२ डमरुय३ काहल४ वुक्क५ भेरी६ भाणक७ पडह८ जगझम्प९ करडि१० पुगथमद्दल११ कंसाल१२ रणनान्दी२ इति रणनान्दीयम् ॥

(६) क्रीडनीयकपात्रस्य ।

(७) विटः पुंलि, अतःपरं यावत्काण्डसमाप्तिर्नाट्योक्ताधिकारः ।

भावो[1] विद्वान् युवराजः कुमारो[1] भर्तृदारकः[2] ॥२४६॥
बाला वासू[1] मार्ष[1] आर्यो[2] देवो[1] भट्टारको[2] नृपः ।
राष्ट्रियो[1] नृपतेः स्यालो दुहिता भर्तृदारिका[1] ॥२४७॥
देवी[1] कृताभिषेकाऽन्या भट्टिनी[1] (१) गणिकाऽज्जुका[2] ।
नीचा-चेटी-सखी-सञ्ज्ञौ हण्डे[1] हञ्जे[1] हलाः[1] क्रमात् (२) ॥
अब्रह्मण्य[1] मवध्योक्तौ ज्यायसी तु स्वसाऽत्तिका[1] (३) ।
भर्त्ता ऽऽर्य पुत्रो[1] माताऽम्बा[1] भदन्ताः[1] सौगतादयः ॥२४९॥
पूज्ये[1] तत्रभवा[2] नत्रभवां[2] श्च भगवा[4] नपि ।
पादा[1] भट्टारको[2] देवः[2] प्रयोज्यः पूज्यनामतः (४) ॥२५०॥

इत्याचार्य्य श्रीहेमचन्द्रविरचितायामभिधानचिन्ता-
मणौ नाममालायां देवकाण्डो द्वितीयः ॥

---

(१) यन्महेश्वरः "भट्टिनी द्विजभार्यायां नाट्योक्तौ राजयोषिति" ।

(२) एषां त्रयाणां सम्बोधनत्वादन्येऽन्यानि रूपाणि नस्युः "अथो-त्थाय सखीनां सा प्रेष्या लक्ष्यादिगोऽखिलाः । अदर्शयत् कराग्रेण हलाः पश्यत पश्यत इति" तिलकाचार्य्यः । एवं हला इत्यस्य एकवचनबहुवच-नोदाहरणम् ॥

(३) भर्त्तेव मातेव [illegible] ।

(४) पूज्यनामतः अर्थे प्रयोक्तव्याः, भट्टारकस्य ।

# मर्त्त्यकाण्डः ।

तृतीयः ।

मर्त्त्यः[1] पञ्चजनो[2] भूस्पृक्[3] पुरुषः[4] पूरुषो[5] नरः[6] ।
मनुष्यो[7] मानुषो[8] ना[9] विट्[10] मनुजो[11] मानवः[12] पुमान्[13] ॥१॥
बालः[1] पाकः[2] शिशु[3] र्डिम्भः[4] पोतः[5] शावः[6] स्तनन्धयः[7] ।
पृथुका[8]-र्भा[9]-त्तानशयाः[10] क्षीरकण्ठः[11] कुमारकः[12] ॥२॥
शिशुत्वं[1] शैशवं[2] बाल्यं[3] वयस्थस्तरुणो[2] युवा[3] ।
तारुण्यं[1] यौवनं[2](१) वृद्धः[1] प्रवयाः[2] स्थविरो[3] जरन्[4] ॥३॥
(२)जरी[5] जीर्णो[6] यातयामो[7] जीनो[8]ऽथ विस्रसा[1] जरा[2] ।
वार्द्धकं[1] स्थाविरं[2] ज्यायान्[1] वर्षीयान्[2] दशमी[3] त्वपि(३) ॥४॥
विद्वान्[1] सुधीः[2] कवि[3]-विचक्षण[4]-लब्धवर्णा[5] ज्ञः[6]
प्राप्तरूप[7]-कृति[8]-कृष्ट्य[9]-भिरूप[10]-धीराः[11] ।
मेधावि[12]-कोविद[13]-विशारद[14]-सूरि[15]-दोषज्ञाः[16]
प्राज्ञ[17]-पण्डित[18]-मनीषि[19]-बुध[20]-प्रबुद्धाः[21] ॥४॥
व्यक्तो[22] विपश्चि[23]त्संख्यावान्[24] सन्[25] प्रवीणे तु शिक्षितः ।
निष्णातो[3] निपुणो[4] दक्षः[5] कर्म्म[6]-हस्त[7]-मुखाः[8] कृतात्[9](४)

(१) यौवनशब्दः पुं क्ली ।

(२) जरी जरिणौ जरिणः इति रूपाणि ।

(३) अतिवृद्धस्य, दशमिनौ दशमिनः ॥

(४) कृतकर्म्मा कृतकर्म्माणौ कृतकर्म्माणः कृतहस्तः, कृतमुखः, इत्यादि ॥

कुशल[९] श्चतुरो[१०] ऽभिज्ञ[११]-विज्ञ[१२] वैज्ञानिकाः[१३] पटुः[१४] ।
छेको[१] विदग्धे[२] प्रौढ़[१] स्तु प्रगल्भः[२] प्रतिभान्वितः[३] (१) ॥७॥
कुशाग्रीयमतिः[१] सूक्ष्मदर्शी[२] तत्कालधीः[१] पुनः ।
प्रत्युत्पन्नमति[२] दूरा द्यः पश्ये दीर्घदर्श्यऽसौ ॥८॥
हृदयालुः[१] सहृदय[२] श्चिद्रूपो(२) ऽथ संस्कृते[१] ।
व्युत्पन्न[२]-प्रहत[३]-क्षुण्णा[४](३) अन्तर्वाणि[१](४) स्तु शास्त्रवित् ॥९॥
(५)वागीशो[१] वाक्पती[२] वाग्मी[१] (६)वाग्योयुक्तिपटुः[२]प्रवाक्[३] ।
समुखो[४] वावदूको[५] ऽथ वदो[१] वक्ता[२] वदावदः[३] ॥१०॥
स्याज्जल्पाक[१] स्तु वाचालो[२] वाचाटो[३] बहुगर्ह्यवाक्[४] ।
(७)थद्वदो[१] ऽनक्षरा[२]-दुर्वाक्[१] कद्वदे[२] स्यादथा धरः[१] ॥११॥
(८)हीनवादि[२]न्यैडमूका[१]-नेडमूकौ[२] तु वाक्श्रुतौ ।
रवणः[१] शब्दन[२] स्तुल्यौ कुवाद[१]-कुचरौ[२] समौ ॥१२॥

---

(१) प्रतिभामुखः इति वा पाठः ॥

(२) त्रीणि वस्तुतत्त्वज्ञानवतः ।

(३) चत्वारि: शास्त्रादितत्त्व चतुरस्य ।

(४) शास्त्रं वेत्ति न च तथा वक्तुं शक्नोति यः सोऽन्तर्वाणिः ॥

(५) इयं प्रधानवक्तुः वागीशः वाक्पतिः वाग्मी इति त्रीणि, प्रशा-गित्येकं, समुखः वावदूक इति द्वे इति मतान्तरम् ।

(६) पञ्च प्रतिभायुक्तवाक्यकस्य, वाग्मीत्यत्र गकारद्वयं पठनीयम् प्रशस्ता वाग्विद्यतेऽस्येति ग्मिन् प्रत्ययः, तेन गकारद्वय श्रवणम् । यदि तु मिनिरित्येयं स्यात तर्हि यरोऽनुनासिकः स्यात् प्रत्यये नित्यमिष्यत इति, यो हि वाग्मभाषते स वाग्मीत्येव भवतीति कृष्णभट्टः, वाग्ग्मा-भीति वाग्मी वाग्ग्मिनो अस्य कुत्र कास्य च पाठव इति गः, गस्यग्मिना संयोग्यारणे गकार द्वय श्रवणं भवतीति च माधवभट्टः ।

(७) अनूसरे इति वा, तस्मिते पश्चाद्युत्तरदातृनाम ।

(८) हीनं स्वपराजयं वक्तीति विग्रहः ।

लोहलो[१] ऽस्फुटवाग्[२] मूको[१] ऽवाग्[२] सौम्यस्वरो[१] ऽस्वरः[२] ।
वेदिता[१] विदुरो[२] विन्दु[३] र्वन्दारु[१] रभिवादकः[२] ॥१३॥
आशंसु[१] राशंसितरि[२] कङ्कर[१](१) स्त्वतिकुत्सितः ।
निराकरिष्णुः[१] क्षिप्नुः[२](२) स्याद्विकारी[१] तु विकस्वरः[२] ॥१४॥
दुर्मुखे[१] मुखरा[२]-बद्धमुखौ[३] शक्लः[१] प्रियंवदः[२] ।
दानशीलः स वदान्यो[१] वदन्यो ऽप्यथ बालिशः[१] ॥१५॥
मूढो[२] मन्दो[३] यथाजातो[४] बालो[५] मातृमुखो[६] जडः[७] ।
मूर्खो[८] ऽमेधो[९]-विवर्णो[१०]-ज्ञौ[११] वैधेयो[१२] मात्यपाशितः[१३] ॥१६॥
देवानांप्रिय[१४]-जाल्मौ[१५] च (३)दीर्घसूत्र[१] श्चिरक्रियः[२] ।
मन्दः क्रियासु कुण्ठः स्यात् क्रियावान्[१] कर्म्मसूद्यतः ॥१७॥
कर्म्मक्षमो[१] ऽलङ्कर्म्मीणः[२] कर्म्मशूर स्तु कर्म्मठः[२] ।
कर्म्मशीलः[१] कार्म्मि[२] आयःशूलिक[१] स्तीक्ष्णकर्म्मकृत् ॥१८॥
सिंहसंहननः[१] खड्गः[२] स्वतन्त्रो[१] निरवग्रहः[२] ।
यथाकामी[२] स्वरुचि[४] च स्वच्छन्दः[५] स्वैरी[६] व्यपावृतः[७] ॥१९॥
यदृच्छा[१] स्वैरिता[२] स्वेच्छा[३] नाथवान्[१] निघ्न[२]-गृह्यकौ[३] ।
तन्त्रा[४]-यत्त[५]-वशा[६]-धीन[७]-च्छन्द[८]-वन्तः[९] परात्मरे(४) ॥२०॥

---

(१) कङ्करः कङ्कट इति वा पाठः ।

(२) क्षिप्रः इति वा पाठः ।

(३) दीर्घसूत्र अकारान्तो, देववत् दीर्घसूत्री इत्यपि व्यञ्जनान्तो णिन्प्रत्ययान्तत्वात् यदाह हलायुधः "दीर्घसूत्री जडक्रियः" इति दीर्घं सूत्रयतीत्येवं शीलो दीर्घसूत्री इति तट्टीका, "सूत्रण् विमोचने" विमोचनं मोचनाभावो ग्रन्थनमिति यावत् इति धातुपारायणम् ॥

(४) परतन्त्र १ परायत्तः २ परवशः ३ पराधीन ४ परच्छन्दः ५ परवान् ६ ।

लक्ष्मीवान्[१] लक्ष्मणः[२] श्रील[३] इभ्य[१] आढ्यो[२] धनी[३] श्वरः[४] ।
ऋद्धे[५] विभूतिः[१] सम्पत्ति[२] र्लक्ष्मीः[३] श्री[४]-ऋद्धि[५]-सम्पदः ॥२१॥
दरिद्रो[१] दुर्विधो[२] दुःस्थो[३] दुर्गतो[४] निःस्व[५]-कीकटौ[६] ।
अकिञ्चनो[७]ऽधिप[१] स्वामी[२] नेता[३] परिवृढो[४]ऽधिभूः[५(१)] ॥२२॥
पती[६]-श[७]-स्वामि[८]-नाथा[९]-र्याः[१०] प्रभु[११]र्भर्त्ते[१२]श्वरो[१३] विभुः[१४]
ईशिते[१५] नो[१६] नायकश्च[१७] नियोज्यः[१] परिचारकः[२] ।२३॥
डिङ्गरः[३] किङ्करो[४] भृत्य[५] श्चेटो[६] गोप्यः[७] पराचितः[८] ।
दासः[९] प्रेष्यः[१०(२)] परिस्कन्दो[११] भुजिष्य[१२]-परिकर्म्मिणौ[१३] ॥२४
पराचः[१४]-परपिण्डादः[१५] परजातः[१६] परैधितः[१७] ।
भृतको[१] भृतिभुग्[२] वैतनिकः[३] कर्म्मकरो[४]ऽपि च ॥२५॥
स निर्भृतिः[(३)] कर्म्मकारो[१] भृतिः[१] स्या न्निष्क्रयः[२] पणः[३] ।
कर्म्मण्या[४] वेतनं[५] मूल्यं[६] निर्वेशो[७] भरणं[८] विधा[९] ॥२६॥
भर्म्मण्या[१०] भर्म्म[११] भृत्या[१२] च भोग[१] स्तु गणिकाभृतिः ।
खलपूः[१] स्याद् बहुकरो[२] भारवाह[१] स्तु भारिकः[२] ॥२७॥
वार्त्तावहो[१] वैवधिको[२] भारो[१] विवध[२]-वीवधौ[३] ।
काचः[१] शिक्यं[२] तदालम्बो भारयष्टि र्विहङ्गिका ॥२८॥
शूर[१] श्चारभटो[२] वीरो[३] विक्रान्त[४] श्चाथ कातरः[१] ।
दरित[२] श्चकितो[३] भीतो[४] भीरु[५]-भीरुका[६]-भीलुकाः[७] ॥२९॥
विह्वल[१]-व्याकुलौ[२] व्यग्रे[३] कान्दिशीको[१] भयद्रुते ।
उत्पिञ्जल[१]-समुत्पिञ्ज[२]-पिञ्जला-भृशमाकुले ॥३०॥

---

(१) अधिप इति वा पाठः ।

(२) इषि गतिहिंसादर्शनेषु आत्मनेपदिः स्वादिश्च, अस्मात् ण्यति गुणरूपत्वात् गुणाभावे इष्य इति रूपम्, तस्मिन् परे सति गुण एव भवति पररूपानुपातित्वाद्वृद्धेरप्रसङ्गात् प्रेष्यः इति ॥

(३) निर्भृत्यामूल्येन सहितः स निर्भृतिः ।

महेच्छे[१] तूद्भटो-दारो[२]-दात्तो[४]-दीर्ण[५]-महाशयाः[६]।
महामना[७] महात्मा[८] च कृपणस्[१] तु मितम्पचः[२] ॥२१॥
कीनाश[३] (१)स्तद्धनः[४] क्षुद्र[५]-कदर्य[६]-दृढमुष्टयः[७]।
किम्पचानो[८] दयालु[१]स्तु कृपालुः[२] करुणापरः[३] ॥२२॥
सूरतो[४]ऽथ दया[१] शूकः[२] कारुण्यं[३] करुणा[४] घृणा[५]।
कृपा[६]ऽनुकम्पा[७]ऽनुक्रोशो[८] हिंस्रो[१] शरारु[२]-घातुकौ ॥२३॥

व्यापादनं[१] विशरणं[२] प्रमयः[३] प्रमापणं[४]
निर्ग्रन्थनं[५] प्रमथनं[६] कदनं[७] निबर्हणम्[८]।
निस्तर्हणं[९] विशसनं[१०] क्षणनं[११] परासनं[१२]
प्रोज्जासनं[१३] प्रशमनं[१४] प्रतिघातनं[१५] वधः[१६] ॥२४॥
प्रवासनो[१७]-द्वासन[१८]-घात[१९]-निर्वा-
सनानि[२०] संज्ञप्ति[२१]-निशुम्भ[२२]-हिंसाः[२३]।
निर्वापणा[२४]-लम्भ[२५]-निसूदनानि[२६]
निर्यातनो[२७]-न्माथ[२८]-समापनानि[२९] ॥२५॥
अपासनं[३०] वर्जन[३१]-मार[३२]-पिञ्जा[३३]
निष्कारण[३४](२)-क्राथ[३५]-विशारणानि[३६]।
स्युः कर्त्तने[१] कल्पन[२]-वर्द्धने च
छेद[४] ऽथ घातोद्यत आततायी[१] ॥२६॥
वध्यः शीर्षच्छेदिकः[१] शीर्षच्छेद्यो[२](३) यो वधमर्हति।
तप्र[१]-मञ्चीपसम्पन्नः[२] परेत[३]-प्रेत[४]-संस्थिताः[५](४) ॥२

(१) तद्धन इति वा पाठः।
(२) विकारण इति वा पाठः।
(३) शीर्षच्छेदकः इति वा पाठः।
(४) संपूर्व स्थाधातो र्मरणार्थता मादायैतन्निष्पन्नम्।

(१)नामालेख्य-यश:-शेषो[८] व्यापन्नो[९]-पगतो[१०](२) मृतः[११] ।
परासु[१२] स्यादूर्ध्वदानं(३) तदर्थं मौर्ध्वदेहिकम्[१] ॥३८॥
मृतस्नानमपस्नानं[१] निवापः[१] पितृतर्पणम् ।
चिति[१]-चित्या[२]-चिता[३] स्तुल्या ऋजु[१] स्तु प्राञ्जलो[२]ऽञ्जसः[३]॥
दक्षिणो[१] सरलो[२]-दारौ[३] शठ[१] स्तु निकृतो[२]ऽनृजुः[३] ।
क्रूरे[१] नृशंस[२]-निस्त्रिंश[३]-पापा[४] धूर्त्त[१] स्तु वञ्चकः[२] ॥४०॥
व्यंसकः[३] कुहको[४] दाण्डाजिनिको[५] मायि[६]-जालिकौ[७] ।
(४)माया[१] तु शठता[२] शाठ्य[३] कुसृति[४] र्निकृति[५]श्च सा(५)॥४१॥
कपटं[१] (६)कैतवं दम्भः[३](७) कूटं[४] छद्मो[५] पधि[६] श्छलम्[७] ।
व्यपदेशो[८] मिषं[९] लक्ष्यं[१०] निभं[११] व्याजो[१२]ऽथ कुसृतिः[१]॥४२॥
कुहना[२] दम्भचर्या[३] च वञ्चनं[१] तु प्रतारणम् ।
व्यलीक[३]मतिसन्धानं[४](८)साधौ[१] सभ्या[२]-र्य[३]-सज्जनाः[४] ॥४३॥
(९)दोषैकदृक्[१] पुरोभागी[२] कर्णेजप[१] स्तु दुर्जनः[२] ।
पिशुनः[३] सूचको[४] नीचो[५] द्विजिह्वो[६] मत्सरी[७] खलः[८]॥४४॥

---

(१) नामशेषः आलेख्यशेषः२ यशःशेषः३।

(२) उपगतो इति वा पाठः।

(३) तस्य मृतस्या ऊर्ध्वदेहस्तस्मिन् तदर्हे।

(४) मायादयः कपटादयश्च एकार्था इत्येके, "कपटादयः सप्त व्यपदेशादयश्च पञ्च भिन्नार्था" इत्यमरः तदा कपटादयः सप्त कपट वाचकाः त ापि च वेष-भाषा विपर्य्ययकरणं कपटं, कार्षापण तुलादेः परवञ्चनार्थं न्यूनाधिककरणं कूटमिति विशेषोनाश्रितः।

(५) निष्कृतिरिति केचित्।

(६) कपटं पुंक्ली, कूटं पुंक्ली, छद्मन् पुंक्ली, छद्म, छद्मनी, छद्मानि।

(७) ऽभिसन्धानम् इति वा।

(८) दोषग्राहिणः, पुरोभागिणौ पुरोभागिणः। इत्यन्तो बोद्धव्याः।

व्यसनार्त्त[1] स्तूपरक्त[2] श्चौर[1] स्तु प्रतिरोधकः[2] ।
दस्युः[3] (१)पाटच्चर[4] स्तेन[5] स्तस्करः[6] पारिपन्थिकः[7] ॥४५॥
परिमोषि[8]-पराास्कन्द्यै[9](२) कागारिक[10] मलिम्लुचाः[11] ।
यः पश्यतो हरेद् द्रव्यं स चौरः पश्यतोहरः[1] ॥४६॥
चौर्य्यं[1] तु चौरिका[2] स्तेयं[3] (३)लोप्त्रं[1] (४)त्वपहृतं धनम् ।
यद्भविष्यो[1] दैवपरो[2] ऽथालस्यः[1] शीतको[2] ऽलसः[3] ॥४७॥
मन्द[4] स्तुन्दपरिमृजो[5] ऽनुष्णो[6] दक्ष[1] स्तु पेशलः[2] ।
पटू[3]-ष्णो[4]-ष्णक[5]-सूत्थान[6]-चतुरा[7] स्वाथ तत्परः[1] ॥४८॥
आसक्तः[2] प्रवणः[3] प्रह्वः[4] प्रसित[5] श्च परायणः[6] ।
दाता[1] दारुः[2] स्थूललक्ष्य[1]-दानशौण्डौ[2] बहुप्रदे[3] ॥४९॥
दान[1] मुत्सर्जनं[2] त्यागः[3] प्रदेशन[4]-विसर्ज्जने[5] ।
विहायितं[6](५) वितरणं[7] स्पर्शनं[8] प्रतिपादनम्[9] ॥५०॥
विश्राणनं[10] निर्वपण[11] मपवर्ज्जन[12] मंहतिः[13] ।
अर्थव्ययज्ञः सुकलो[1] याचक[1] स्तु वनीपकः[2](६) ॥५१॥
मार्गणो[3] ऽर्थी[4] याचनक[5] स्तर्कुको[6] ऽथार्थनै[1] षणा[2](७)
ऽर्द्दना[3] प्रणयो[4] याच्ञा[5] याचना[6] ऽध्येषणा[7] सनिः[8] ॥५२॥

---

(१) पटच्चर इत्यपि ।

(२) पराास्कन्दी पराास्कन्दिनौ पराास्कन्दिनः ।

(३) स्तेनस्य भावस्तेयं, स्तेनाद्य लुक् चेति यः, राजादित्वात् ष्यञि चौर्य्यमपि ।

(४) लोप्रमित्यपि हलायुध टीका ।

(५) विहापितम् इति वा पाठः ।

(६) वनीयक इति कश्चित् ।

(७) तर्क्कुकः इति वा पाठः ॥

(८) अर्थनेत्याद्यष्टसु प्रथमः पुंसि, अन्ये स्त्रियां। सनिशब्दः पुंस्यपि।

उत्पतिष्णु[१] रुत्पतिता[२]ऽलङ्करिष्णु[१]स्तु मण्डनः[२] ।
भविष्णु[१]र्भविता[२] भूष्णुः समौ वर्त्तिष्णु[१] वर्त्तनौ[२] ॥५२॥
(१)विसृत्वरो[१] विसृमरः[२] प्रसारी[३] च विसारिणि[४] ।
लज्जाशीलो[१]ऽपत्रपिष्णुः[२] सहिष्णुः[१] क्षमिता[२] क्षमी[३] ॥५३॥
तितिक्षुः[४] सहनः[५] क्षन्ता[६] तितिक्षा[१] सहनं[२] क्षमा[३] ।
ईर्ष्यालुः[१] कुहनो[२] क्षान्ति[१] रीर्ष्या[२] क्रोधी[१] तु रोषणः[२] ॥५५॥
अमर्षणः[३] क्रोधन[४]श्च चण्ड[१]स्त्वत्यन्तकोपनः ।
बुभुक्षितः[१] स्यात् क्षुधितो[२] जिघत्सु[३] रशनायितः[४] ॥५६४॥
बुभुक्षाया अशनाया[१] जिघत्सा[२] रोचको[४] (२)रुचिः[५] ।
पिपासुः[१] तृषित[२] स्तृष्णक्(३) तृष्णा तर्षो[२]ऽपलाषिका[२] ॥७
पिपासा[४] तृट्[५] तृषो[६] उदन्या[७] धीतिः[८] पाने[९]ऽथ शोषणम्[१] ।
रसादानं[२] भक्षक[१]स्तु घस्मरो[२]ऽद्मर[३] आशितः[४](४) ॥५८॥
भक्त[१] मन्नं[२] कूर[३] मन्धो[४](५) भिक्षा[५] दी दिवि[६] रोदनः[७] ।
अशनं[८](६) जीवनकं[९] च याजो[१०] वाजः[११] प्रसादनम्[१२] ॥५९
भिस्सटा[१] दग्धिका[२] सर्व्वरसाग्रं मण्ड[१] मतं तु(७) ।
दधिजे मस्तु भक्तोत्थे निस्रावा[१]-चाम -मासराः[२] ॥६०॥

---

(१) प्रसरण शीलस्य ।

(२) रोचनं रोचतेऽस्मिन्निति वा रोचकः नास्ति पुंसि चेति ।

(३) तृष्णक् तृष्णजौ तृष्णजः ॥

(४) आशिता इति वा पाठः ।

(५) कूरमिति पुंक्ली, अन्धः अन्धसी अन्धांसि ।

(६) अशनं पुंक्ली, अशनं अशनः ॥

(७) मण्डं पुंक्ली, मस्तु क्ली, "दध्नस्तु यदधस्तोयं तन्मस्तु च निगद्यते" इति धन्वंतरिः ॥ सर्व्वरसाग्र्यं इति वा पाठः ।

श्राणा[१] विलेपी[२] तरला[३] यवागू[४] रुष्णिका[५]ऽपि च।
सूपः[१] स्यात् प्रहितं[२] सूदो[३] व्यञ्जनं[१] तु घृतादिकम् ॥६१॥
तुल्यौ तिलान्ने कृसर[१]-त्रिसरा[२](१) वथ पिष्टकः[१](२)।
पूपो[२]ऽपूपः[१२] पूलिका[१] तु पोलिका[२]-पोलि[३](३)-पूपिकाः[४] ॥६२
(४)सूपल्य[५] ये[६] घृतपक्वे स्युरभ्यूषा[१]-भ्योष[२]-पौलयः[३]।
(५)निष्ठानं[१] तु तेमनं[२] स्यात्करम्भो[१] दधिसक्तवः ॥६३॥
घृतपूरो[१] घृतवरः[२] पिष्टपूर[३]श्च घार्त्तिकः[४]।
(६)चमसी[१] पिष्टवर्त्तिः[२] स्याद् वटक[१]स्त्व वसेकिमः[२] ॥६४॥
भृष्टायवाः पुनर्धाना[१](७) धानाचूर्णं तु सक्तवः[१](८)।

---

(१) कृसरः पुंस्त्री, क्लीबेऽपि, वैजयन्ती यदाह "तिलतण्डुलमाषैस्तु कृसरास्त्रिसरालयीति" ॥ (२) पिष्टकः पुंक्ली ॥

(३) पौलि इति वा, "किञ्चित् स्थूलाभवेयुश्च तेभ्यः पूपलिकाः स्मृताः। सैवाङ्गारेषु सम्पक्वा विज्ञेयाङ्गार-कर्कटी" पूलिकाद्याः पञ्च स्थूल भक्ष्यपर्य्यायाः ॥

(४) इह प्रस्तावात् सामान्यतोऽनुक्तान्यपि पिष्टनामानि त्रीणि, पिष्टकः१ चमसः२ चूर्णश्च३ "पिष्टको नेत्ररोगे स्याद्धान्यादि चमसेऽपि चेति" महेश्वरः। चमसशब्दस्तु चमसीत्यत्र निर्द्दिष्टोऽतस्तत एवानसेयः।

(५) निष्ठानं पुंक्ली।

(६) चमसी स्त्रीलिङ्गः, गौड़स्तु "चमसः पिष्टवर्त्तिः स्यादिति" पुंस्याह, चमसः पिष्टं चमसी मुद्गादिपिष्टकृता इति हेमोणादि हैमधातु पारायणयोः सामान्यवचनात् चमसीशब्दो वडोत्यादि प्रसिद्धेऽपि "स्थूलौ चमसीं मसीति" अमरस्त्रीलिङ्गशेषः चमसीमसूरादीन्याहुरिति क्षीरस्वामी ॥

(७) धानाः स्त्रीलिङ्गो बहुवचनान्तश्च।

(८) सक्तुः पुंक्ली।

पिच्छिलं[१] तु विजिलिलं[२] विज्जलं[३] विजिलं[४](१) च तत् ।
भावितं[१] तु वासितं[२] स्यात् तुल्ये संसृष्ट[१]-शोधिते[२] ॥७८॥
काञ्चिकं[१] काञ्जिकं[२] धान्याम्ला[३]-रनाले[४] तुषोदकम्[५] ।
कुल्माषाभिषुता[६](२)-वन्तिसोम[७]-शुक्तानि[८] कुञ्जलम्[९] ॥७९॥
चुक्रं[१०] धातुघ्नं[११] महाम्लं[१२] रक्षोघ्नं[१३] कुण्डगोलकम्[१४] ।
महारसं[१५] सुवीराम्लं[१६] सौवीरं[१७] मच्चर्णं[१](३) पुनः ॥८०॥
तेमः[२] स्नेहो[१](४)ऽभ्यञ्जनं[४] च वेसवारः[१] उपस्करः[२] ।
स्यात्तिन्तिडीकं[१] तु चुक्रं[२] वृक्षाम्लं[३] चाम्लवेतसे[४] ॥८१॥
हरिद्रा[१] काञ्चनी[२] पीता[३] निशाख्या[४] वरवर्णिनी[५] ।
क्षवः[१] क्षुताभिजननो[२] राजिका[३] राजसर्षपः[४] ॥८२॥
आसुरी[५] कृष्णिका[६] चासौ कुस्तुम्बुरु[१] तु धान्यकम्[२] ।
धन्या[३](५) धन्याकं[४] धान्याकं[५] मरिचं[१](६) कृष्णं[२] ऊषणम्[३] ॥८३॥
कोलकं[४] वेल्लजं[५] धर्मपत्तनं[६] यवनप्रियम्[७] ।
शुण्ठी[१] महौषधं[२](७) विश्वा[३](८) नागरं[४] विश्वभेषजम्[५] ॥८४॥
वैदेही[१] पिप्पली[२] कृष्णा[३] उपकुल्या[४] मागधी[५] कणा[६] ।
तन्मूलं ग्रन्थिकं[१] सर्वग्रन्थिकं[२] चटकाशिरः[३] ॥८५॥
त्रिकटु[१] त्र्यूषणं[२] व्योषं[३] अजाजी[१](९) जीरकः[२] कणा[३] ।
सहस्रवेधि[१] बाह्लीकं[२] जतुकं[३](१०) हिङ्गु[४] रामठम्[५] ॥८६॥

---

(१) विज्जिलं पिञ्जिलं-विज्जलविजलमतौ वा ।

(२) कुल्माषे यवादिभिः स्विन्नैः अभिषूयते परिवास्यतेऽस्मात् कुल्माषाभिषुतं व्यस्तमपि तेन कुल्माषमभिषुतं चेति ।

(३) मच्च स्नाने चुरादिः परस्मैपदी, अनटि मच्चणं [illegible] रोगे इत्येके ।

(४) स्नेहः पुंक्लीबे, स्नेहः स्नेहम् ।

(५) धन्या आबन्तो स्त्रीलिङ्गः ।

(६) मरीचं इत्यपि ।

(७) विश्वा स्त्रीक्लीबे विश्वा विश्वम् ।

(८) पुंक्लीबे ।

(९) जीरकः पुंक्लीबे, जातुकं क्लीबे ।

न्यादः[1] स्वदनं[2] खादनं[3] मघ्नं[4]

निघसो[5] वल्भनं[6] मभ्यवहारः[7] ।

जग्धि[8] र्घसना[9]-भक्षणा[10]-लेहाः[11]

प्रत्यवसानं[12] घसि[13] राहारः[14] ॥८७॥

प्साना[15]-वष्वाणा[16]-विष्वाणा[17] भोजनं[18] जेमना[19]-दने[20] ।

चर्व्वणं[1] चूर्णनं दन्तै र्जिह्वास्वाद स्तु लेहनम् ॥८८॥

वाल्यवर्त्तः[1] प्रातराशः[2] सग्धि[1] स्तु सहभोजनम्(1) ॥

ग्रासो[1] गुडेरकः[2](2) पिण्डो[3] गडोलः[4] कवको[5] गुडः[6] ॥८९॥

गाण्डोलः[7](3) कवल[8] स्तृप्ते[1] स्त्वाघ्रात[2](4)-सुहिता[3]-शिताः

तृप्तिः[1] सौहित्य[2] माघ्राणं[3](5) मथ भुक्तसमुज्झिते[1](6) ॥९०॥

फेला[2] पिण्डोलि[3] फेली[4] च स्वोदरं पूरके पुनः ।

कुक्षिम्भरि[1] रात्मम्भरि[2] रुदरम्भरि[3] रप्यथ ॥९१॥

आद्यूनः[1] स्यादौदरिको[2] विजिगीषाविवर्ज्जिते(7) ।

उदरपिशाचः[1] सर्व्वान्नीनः[2] सर्व्वान्नभक्षकः[3] ॥९२॥

घाप्कुलः[1] पिशिताशु[2] न्मदिष्णु[1] स्तून्मादसंयुतः ।

गृध्नु[1] स्तु गर्द्धन[2] स्तृष्णक्[3] लिप्सु[4] र्लुब्धो[5]ऽभिलाषुकः[6] ॥९३॥

लोलुपो[7] लोलुभो[8] लोभ[1] स्तृष्णा[2] लिप्सा[3] वशः[4] स्पृहा[5] ।

कांक्षा[6] शंसा[7] गर्द्ध[8] वाञ्छा[9] शी[10] रिच्छे[11] हा[12] तृट्[13] मनोरथाः ।

कामो[14](8) ऽभिलाषो[15] ऽभिध्या[1] तु परस्वेहा द्रुतः[1] पुनः ।

अविनीतः[2] विनीत[1] स्तु निभृतः[2] प्रश्रितो[3]ऽपि च ॥९४॥

---

(१) सन्धि स्त्री । (२) पिण्डः पुंक्ली । (३) कवलः पुंक्ली ।

(४) आघ्रातः इति वा । (५) आघ्राणं इति वा ।

(६) भुक्तोच्छिष्टम् उच्छिष्टं चान्न ॥

(७) विजेतु मिच्छा विजिगीषा तया विवर्ज्जितो तस्मिन् ।

(८) अभिलापः पुंक्ली ।

(१)विधेये विनयस्थः[२] स्यादा(२) श्रवो[१](३) वचनेस्थितः ।
वश्यः[१] प्रणेयो[२] धृष्टस्तु, वियातो[२] धृष्णु-धृष्णुजौ[४] ॥९६॥
वीक्षापन्नो[१](४) विलक्षो[२]ऽथा ऽधृष्टे[१] शालीन[२]-शारदौ[३] ।
(५)शुभंयुः[१] शुभसंयुक्तः स्या-दहंयु[१] रहङ्कृतः[२] ॥९७॥
कामुकः[१] कमिता[२] कन्त्रो[३] ऽनुकः[४] कामयिता[५] ऽभिकः[६] ।
कामनः[७] कमरो[८] ऽभीकः[९](६) पश्चभद्र[१] स्तु विश्रुतः[२] ॥९८॥
व्यसनी[२](७) हर्षमाण[१] स्तु प्रमना[२] हृष्टमानसः[३] ।
त्रिकुर्व्वाणो[४] विचेता[१] स्तु दु-रन्त-र्वि-परो मनाः[४](८) ॥९९॥
मत्त[१] शौण्डो[२]-त्कट[३]-क्षीबा[४] उत्क[१] स्तु त्सुक[२] उन्मनाः[३] ।
उत्कण्ठितो[४] ऽभिशस्त[१] स्तु वाच्य[२]-चारित[३]-दूषिताः[४] ॥१००॥
गुणैः प्रतीते(९) स्या त्कृतलक्षणः[१] क्षतलक्षणः[२] ।
निर्लक्षण[२] स्तु पाण्डुरपृष्ठः सङ्कसुको[१] ऽस्थिरे[२](१०) ॥१०१॥

---

(१) स्वगतौ क्त प्रत्ययेऽनुस्वारे व्यामेट "तस्यैवमेऽनुरक्तस्य प्रसृतस्य हृतैनस" इति भागवतम् । प्रसृतस्य विनीतस्येति तट्टीका ।

(२) आज्ञाकारिणः विधेयो विनयस्थस्य नामद्वयम् ॥

(३) आश्रवाः इति वा दृष्याऔ इति वा ।

(४) वीक्ष्यशब्दोऽन्तस्थाद्यमोऽन्तस्थाद्य रहितोपि अतो वीक्ष्यापन्नः वीक्षापन्न इत्युभयं भवति "वीक्ष्यापन्नः सविस्मय" इति हारावली ॥

(५) शुभं योऽपीति हलायुध टीका ।

(६) कमनोऽभीकः इति वा पाठः । (७) इभ्यः ।

(८) दुर्म्मनाः१ अन्तर्म्मनाः२ विमनाः३ दुर्म्मनसौ विचेतसौ उन्मनसौ इत्यादि ।

(९) प्रख्याते इत्यर्थः, आहतलक्षणः षट्कारमखण्डं नाम "इक्ष्वाकुवंश्यः ककुदं नृपाणां काकुत्स्थ इत्याहतलक्षणोऽभदिति" रघुः ।

(१०) संकुसिकोऽ इति वा, अनिश्चिते इति क्षीरस्वामी ।

सह्रा ञ्चति तु सध्र्यङ्[1] स्यात्तिर्य्यङ्[1] पुन स्तिरो ञ्चति ॥१०८॥
शंशयालुः[1] संशयिता[2] गृहयालुर् ग्रहीतरि[2] (1) ।
पतयालुः[1] पातुकः[2] स्यात् समौ रोचिष्णु[1] रोचनौ[2] (2) ॥१०९॥
दक्षिणार्ह[1] स्तु दक्षिण्यो[2] (3) दक्षिणीयो[3] ऽथ दण्डितः[1] ।
दापितः[2] साधितो[1] ऽर्च्य[1] स्तु प्रतीक्ष्यः[2] पूजितो ऽर्हितः[2] ॥११०॥
नमस्यितो[3] नमसिता[4]-पचिता[5] वञ्चितो[6] ऽञ्चितः ।
पूजा[1] ऽर्हणा[2] सपर्य्या[3] ऽर्चा[4] उपहार[1]-बली[2] समौ (4) ॥१११॥
विक्लवो[1] विह्वलः[2] स्थूलः[1] पीवा[2] (5) पीन[3] श्च पीवरः[4] (6) ।
चक्षुष्यः[1] सुभगो[2] द्वेष्यो[1] ऽक्षिगतो[2] (7) ऽथांसलो[1] बली ॥११२॥
निर्दिग्धो[3] मांसल[4] श्चोपचितो[5] ऽथ दुर्बलः[1] कृशः[2] ।
क्षामः[3] क्षीण[4] स्तनु[5] श्छात[6] स्तलिना[7]-मांस[8]-पेलवाः[8] ॥११३॥

---

विष्वद्रीची, यन्माघः "विष्वद्रीची र्विक्षिपन् सैन्यवीचीः" ॥ पूजायां ग-
वादौ विष्वद्र्यञ्चः विष्वद्र्यञ्चा । विष्वद्र्यग्भ्यामित्यादि । स्त्रियां विष्व-
द्रीची नदीवत् । क्लीबेऽपि विष्वद्र्यग् विष्वद्र्यक् विष्वद्रीची विष्वद्र्यञ्चि ।
विष्वग् इति सर्वतोऽर्थेऽव्ययम् अञ्चते रनर्चायां नलोपः स्यात् नागमश्च
अर्चायां तु नलोपाभावः एवमग्रेतनेष्वपि द्रष्टव्यम् । देवमञ्चति गच्छति
अर्च्चयति वा देवद्र्यङ् । सहाञ्चति गच्छत्यर्च्चति वा सध्र्यङ् । तिर्य्यगञ्च-
तीति गच्छतीति तिर्य्यङ् ॥

(1) ग्रहीतरि इति वा । (2) रोचिनौ इत्यपि ।

(3) दक्षिण्यो दक्षिणी ॥

(4) "कुर्वन्नमन्या बलिपटलतां भूलिनि श्लाघनीयामिति" कालिदासः, "उपहारो बलिः स्मृत" इति हलायुधः । देवाग्रे निहितनैवेद्य इति तट्टीका, बलीति पुंस्त्री, बलिः बलीति रूपम् ॥

(4) पीयानौ पीवानः ॥

(5) इष्टसुखदप्रियस्य द्वे । (6) इष्टदुःखद अप्रियस्यापि द्वे ।

पिचण्डिलो[१] बृहत्कुक्षि[२]स्तुन्दि[३]-तुन्दिक[४]-तुन्दिलाः[५] ।
उदर्यु[५] दरिले[७] विख्[१]-त्रिखु[२]-विग्रा[३]- अनासिके ॥११४॥
नतनासिकेऽवनाटो[१]ऽवटीटो[२]ऽवभ्रटो[३]ऽपि च ।
(1)खरणा[१]स्तु खरणसो[२] नः क्षुद्रः[१] क्षुद्रनासिकः(2) ॥११५॥
खुरणाः(3) स्यात् खुरणस[२] उन्नस[१]स्तु ग्रनासिकः ।
पङ्गुः[१] श्रोणः[२] खलति[१]स्तु खल्वाट[२] ऐन्द्रलुप्तिकः[३] ॥११६॥
शिपिविष्टो[४] बभ्रु[५] रथ(4) काणः[१] कानन[२] एकदृग्[३] ।
पृश्नि[१] रल्पतनौ[२] कुब्जो[१] गडुलः[२] कुकरे[१] कुणिः[२] ॥११७॥
निखर्वः[१] खट्टनः[२](5) खर्व[३] खर्वशाख[४] स वामनः[५] ।
(6)अकर्ण[१] एडो[२] बधिरो[३] दुश्चर्मा[१] तु द्विनग्नकः[२] ॥११८॥
षण्ड[३]श्च शिपिविष्ट[४]श्च खोड[१]-खोरौ[२] तु खञ्जके[३] ।
विकलाङ्ग[१]स्तु पोगण्ड[२] ऊर्द्धज्ञु[१] रूर्द्धजानुकः[२] ॥११९॥
(7)ऊर्द्धज्ञ[३] स्या प्यथ प्रज्ञु[१](8) प्रज्ञौ[२] (9)विरलजानुके ।

(१) खरणसौ खरणासः । (२) क्षुद्राऽल्पा नासिकाऽस्य विग्रहः ।
(३) खुरणसौ खुरणसः इत्यादि । (४) बभ्रुरथ इत्येकं पदं वा ।
(५) "खट्टम् सम्वरणे" खट्टयति खट्टनः । खट्टतः इति वा पाठः ।
(६) असंपूर्णत्वात् निन्दितं शेफाग्रस्य चर्म अस्य दुश्चर्मा, अग्रसिद्धत्वात् निराच्छादनत्वाच्च द्विनग्नो द्विनग्नकः, षण्डतेऽपि धत्ते षण्डः वण्डस्य इति वा ।
(७) ऊर्द्धज्ञुरित्यपि, यन्माघैकादशसर्गः "परिशिथिलित कर्णग्रीवमामीलिताक्षः क्षणमयमनुभूय स्वप्नमूर्द्धज्ञुरेव रिरसयिषति भूयः शष्पमग्रे विकीर्णं पटुतर चपलौष्ठं प्रस्फुरत्प्रोथमश्वः ॥"
(८) प्रगते प्रबद्धे प्रसृते प्रकृष्टे जानुनी अस्य, प्रज्ञुः प्रज्ञः इति दर्शनात् प्रज्ञजानुकाद्या अप्युच्यन्ते ॥
(९) विरले वातादिदोषात् जानुनी अस्य विरलजानुकस्तस्मिन् ।

संज्ञु[1]-संज्ञौ[2] सृतजानौ वलिनो[1] वलिभः[2] समौ ॥१२०॥
उदग्रदन्[1(1)] दन्तुरः[2] स्यात् प्रलम्बाण्ड[1]स्तु मुष्करः[2] ।
अन्धो[1] गताक्ष उत्पश्य[1] उन्मुखो[2]ऽधोमुख[1]स्त्ववाङ्[(2)] ॥१२१॥
मुण्ड[1]स्तु मुण्डितः[2] केशी[1(3)] केशवः[2] केशिको[3]ऽपि च ।
वलिरः[1] केकरो[2] वृद्धनाभौ[1] तुण्डिल[2] तुण्डिभौ[3] ॥१२२॥
आमयाव्य[1] पटु[2]र्ग्लानो[3] ग्लास्नु[4] र्विकृत[5] आतुरः[6] ।
व्याधितो[7]ऽभ्यमितो[8]ऽभ्यान्तो[9] दद्रुरोगी[1] तु [(4)]दद्रुणः[2] ॥१२३॥
पामनः[1] कच्छुर[2] स्तुल्यौ सातिसारो[1]ऽतिसारकी ।
वातकी[1] वातरोगी[2] स्यात् श्लेष्मलः[1] श्लेष्मणः[2] कफी[3] ॥१२४॥
क्लिन्ननेत्रे[1] चिल्ल[2] चुल्लौ[3] पिल्लो[4]ऽप्यर्शोयु[1] गर्शसः[2] ।
मूर्च्छिते[1] मूर्त[2] मूर्च्छालौ[3] सिध्मल[1]स्तु किलासिनि[2] ॥१२५॥
पित्तं[1] मायुः[2] कफः[1] श्लेष्मा[2] बलाशः[3] स्नेहभूः[4] खटः[5] ।
रोगो[1] रुजा[2] रुगा[3]तङ्को[4] मान्द्य[5]व्याधि[6]रपाटवम्[7] ॥१२६॥
आम[8] आमय[9] आकल्य[10]-मुपतापो[11] गदः[12] समाः ।
क्षयः[1] शोषो[1] राजयक्ष्मा[2] यक्ष्मा[4]ऽथ क्षुत्[1(5)] क्षुतं[2] क्षवः[3] ॥१२७॥
कासस्तु क्षवथुः[2] पामा[1(6)] खसः[2] कच्छू[3]र्विचर्चिका[4] ।

(१) उदग्र दन्तौ उदग्र दन्तः इत्यादि ॥ (२) अवाञ्चौ अवाञ्चः इत्यादि रूपम् ॥ (३) केशी इन्नन्तः बलातिशयं वक्ष्यते ॥

(४) दीर्यतेऽनया इति दद्रुः कुष्ठभेदः "दृग्विदारणे" दृदृभ्यां द्रुरिति हैमोणादि, सा अस्त्यस्य दद्रुणः शाको पलालीदद्रुर्वो ह्रस्वश्चेति न प्रत्ययः, एतौ द्वौ स्त्रीलिङ्गौ दद्रु दद्रुशब्दौ, दद्रुरोगी ॥

(५) स्त्री, क्षुतौ क्षवः ॥

(६) पामा इत्याबन्तोऽपि गङ्गाधरः "पामनामे विचर्चिका" इत्यमरः क्षवथुः इति वा पाठः ॥

कण्डूः[1] कण्डूयनं[2] खर्जूः[3] कच्छूर्वा[4] ऽथ क्षतं[1] व्रणः[2] ॥१२८॥
(१) अरुः[3] ईर्मं[4] च व्रणायु[5] स्व रूढ़ व्रणपदं किणः[1]।
श्लीपदं[1] पादवल्मीकः[2] पादस्फोटो[1] विपादिका[2] ॥१२९॥
स्फोटकः[1] पिटको[2] गण्डः[3] पृष्ठग्रन्थिः[1] पुनर्गडुः[2] (२) ।
श्वित्रं[1] स्यात् पाण्डुरं[2] कुष्ठं[1] केशघ्नं[1] त्विन्द्रलुप्तकम्[2] ॥१३०॥
सिध्म[1](३) किलासं[2] त्वक्पुष्पं[3] सिध्मं[4] (४) कोठ[1]स्तु मण्डलम्[2]
गलगण्डो[1] गण्डमालो[2] रोहिणी[1] तु गलाङ्कुरः[2] ॥१३१॥
हिक्का[1] हेक्का[2] च हल्लासः[3] प्रतिश्याय[1]स्तु पीनसः[2] ।
शोथ[1]स्तु(५) श्वयथुः[2] शोफे[3] दुर्ना[1]मार्शो[2] गुदाङ्कुरः[3] ॥१३२॥
छर्द्दि[1] प्रच्छर्द्दिका[2](६) छर्दि[3]र्वमथु[4]र्वमनं[5] वमिः[6] ।
गुल्मः[1] स्यादुदरग्रन्थि[2]रुदावर्त्तो[1] गुदग्रहः[2] ॥१३३॥
गति[1]र्नाड़ीव्रणे[2] वृद्धिः[1] कुरण्ड[2](७) श्चाण्डवर्द्धने ।
अश्मरी[1] स्यात् मूत्रकृच्छ्रे[2] प्रमेहो[1] बहुमूत्रता ॥१३४॥
(८)आनाह[1]स्तु विबन्धः[2] स्याद्ग्रहणीरुक्[1]प्रवाहिका[2] ।

---

(१) अरुः अप्सन्नन्त्यान्तः अरुषी अरूंषि, वैजयन्तीकारस्तु 'व्रणो-ऽपीर्मोऽपि न स्त्रियां" इति पुंस्यप्याह नाड़ीव्रणः पुमानित्यमरः ॥

(२) पड्कोऽपि, गडुः पुं ॥ (३) क्ली, सिध्मनी सिध्मानि, नान्तः सिध्म ॥

(४) अथ मकारान्तः, सिध्मे सिध्मानि । मण्डलं त्रिषु ॥

(५) शोथोऽस्त्रीति वैजयन्ती तस्मात् क्लीवेऽपि, श्वयथुः पुं, दुर्नाम्नी दुर्नामनी दुर्नामानि, नान्तः क्ली, अर्शसी अर्शांसि, सान्तः ॥

(६) स्त्री क्ली, छर्द्दिः प्रच्छर्दिका इति वा पाठः, छर्द्दिः स्त्री, वमथुः पुं, वमिः स्त्री, गुल्मः पुं स्त्री ॥

(७) कुकुण्डः इति वा पाठः ।

(८) इयं कोष्ठबन्धस्य । आमाहस्तु निबन्धः स्यादिति पाठोऽपि ॥

व्याधिप्रभेदा विद्रधि-(१) भगन्दर[२]-ज्वरा[३]-दयः ॥१२५॥
दोषज्ञ[१] स्तु (२) भिषग्[२] वैद्य[३] आयुर्वेदी[४] चिकित्सकः[५] ।
रोगहार्य्य[६] गदङ्कारो[७] भेषजं[१] तन्त्र[२] मौषधम्[३] ॥१२६॥
भैषज्य[४] मगदो[५] जायु[६] (३) श्चिकित्सा[१] रुक्प्रतिक्रिया[२] ।
उपचर्य्या[३]-पचारौ[४] च (४) लङ्घन[१] न्त्वपतर्पणम्[२] ॥१२७॥
जाङ्गुलिको[१] विषभिषक् स्वास्थ्ये[१] वार्त्त[२] मनामयम्[३] ।
सह्या[४]-रोगत[५] पटू[१]-ल्लाघ[२]-वार्त[३]-कल्या[४] स्तु नीरुजि[५] ॥१२८
कुहकत्या विभवान्वेषी पार्श्वकः[१] सन्धिजीवकः[२] ।
सत्कृत्यालङ्कृतां कन्यां यो ददाति स कूकुदः[१] ॥१२९॥
चपल[१] श्चिकुरो[२] नीलीराग[१] स्तु (५) स्थिरसौहृदः ।
ततो हरिद्रारागो[१] ऽन्यः सान्द्रस्निग्धस्तु मेदुरः[२] ॥१३०॥
(६) गेहेनर्दी[१] गेहेशूर[२] पिण्डीशूरो[३] ऽस्तिमान्[१] धनी[२] ।
स्वस्थानस्थः परद्वेषी गोष्ठश्वो[१] ऽथापदिस्थितः ॥१४१॥
आपन्नो[१] ऽथाप[१] द्विपत्ति[२] र्विपत्[३] स्निग्ध[१] स्तु वत्सलः[२] ।
उपाध्य[१]-ध्यागारिकौ[२] तु कुटुम्बव्यापृते नरि ॥१४२॥
जैवातृक[१] स्तु दीर्घायु[२] स्त्रासदायी तु शङ्कुरः[१] ।
अभिपन्नः[१] शरणार्थी कारणिकः[१] परीक्षकः[२] ॥१४३॥
समर्द्धुक[१] स्तु वरदो[२] व्रातीनाः[१] सङ्घजीविनः[२] ।

---

(१) एकैकम् विद्रधिः स्त्री । (२) भिषग्भिषजौ भिषजः औषधं पुं क्ली ॥
(३) जायुः पुं ॥ (४) उपचारोपचार्य्यौ च इति वा पाठः ॥
(५) "नीलीरागः स विज्ञेयः स्थिरप्रेमा च यः पुमानिति" हलायुधः ।
(६) गेहेनर्दिनौ गेहेनर्दिनः इत्यादि ॥
(७) अस्तिमन्तौ अस्तिमन्तः अल्पधनवतः ॥

सभ्याः[1] सदस्याः[2] पार्षद्याः[3] सभास्ताराः[4] सभासदः[5] ॥१४४
सामाजिकाः[6] सभा[1] संसत्[2] समाजः[3] परिष[4] त्सदः[5(1)] ।
पर्षत्[6]-समज्या[7]-गोष्ठ्या[8]-स्था[9] आस्थानं[10] समिति[11] र्घटा ॥१४५
सांवत्सरो[1] ज्यौतिषिको[2] मौहूर्त्तिको[3] निमित्तवित्[4] ।
दैवज्ञ[5]-गणका[6]-देष्टि[7]-ज्ञानि[8]-कार्त्तान्तिका अपि ॥१४६॥
विप्रश्निके[10]-क्षणिकौ[11] च सैद्धान्तिक[1] स्तु तान्त्रिकः[2] ।
लेखके[1] ऽक्षरपूर्वाः स्यु[(2)]श्चणा[2]-जीवक[3] चुञ्चवः[4] ॥१४७॥
वार्णिको[5(3)] लिपिकर[6] श्चाक्षरन्यासे लिपि[1] र्लिविः[2(4)] ।
मषिधानं[1] मषिकूपी[2] मलिनाम्बु[1] मषी[2] मसी[3(5)] ॥१४८॥
कुलिक[1] स्तु कुलश्रेष्ठी[2] सभिको[1] द्यूतकारकः[2] ।
कितवो[1] द्यूतकृद्[2] धूर्त्तो[3] ऽक्षधूर्त्त[4] श्चाक्षदेविनि[5] ॥१४९॥
[(6)]दुरोदरं[1] कैतवं[2] च द्यूत[3] मक्षवती[4] पणः[5] ।
पाशकः[1] प्रासको[2(7)] ऽक्ष[3]श्च देवन[4] स्तत्पणो ग्लहः[2(8)] ॥१५०॥
अष्टापदः[1] शारिफलं[2] शारः[1] शारि[2] श्च खेलनी[3(9)] ।
परिणाय[1] स्तु शारीणां नयनं स्यात् समन्ततः ॥१५१॥

---

(१) स्त्री क्ली, सदः सदसी सदसः। स्त्री। सदः सदसी सदांसि इति क्ली ॥

(२) अक्षरचणः १ अक्षरजीवकः २ अक्षरचुञ्चुः ३ अक्षर चञ्चुरित्यपि ॥

(३) वर्णिकः इति वा पाठः ॥

(४) इह ग्रन्थावादनुक्तान्यपि लेखनी नामानि त्रीणि लेखनी ललन्तिका कलमश्च तथा च हारावली "लेखनी बल्लन्तिका" इति ॥

(५) मसी नामानि त्रीणि । (६) दुरोदरं कैतवश्च पुं क्ली ॥

(७) प्रासकः अक्षप्रक्षेपणे दिवादिः ॥

(८) तत्तेषु अक्षेषु पणो बस्तोजय्यत्वेन स्थापितं धनमित्यर्थः ॥

(९) पुं क्ली, गुटिकाया नाम त्रीणि ॥

समाह्वयः[१] प्राणिद्यूतं व्यालग्राह्या[१]हि तुण्डिकः[२] ।
स्यान्मनोजवसः[१(१)] ताततुल्यः शालार[१(२)] तु दैशकः[२]॥१५२
सुकृती[१] पुण्यवान्[२] धन्यो[३] मितद्रु[१] र्मितम्पचः ।
क्षेमङ्करो[१] रिष्टतातिः[२] शिवतातिः[३] शिवङ्करः[४]॥१५३॥
श्रद्धालु[१] रास्तिकः[२] श्राद्धो[३] नास्तिक[१] स्तद्विपर्य्यये ।
वैरङ्गिको[१] विरागार्हो[२] वीतदम्भ[१] स्त्वकल्कनः[२] ॥१५४॥
प्रणाय्यो[१]ऽसम्मती[२]ऽन्वेष्टा[१(३)]ऽनुपद्यथ सहः[१] क्षमः[२] ।
शक्तः[३] प्रभूष्णु[४(४)] र्भूतात्त[१] स्त्वाविष्टः[२] शिथिलः[१] श्लथः[२]॥१५५॥
सम्वाहको[१]ऽङ्गमर्दः[२] स्यान्नष्टवीज[१] स्तु निष्कलः[२] ।
आसीन[१] उपविष्टः[२] स्यादूर्द्ध्व[१] ऊर्द्ध्वन्दमः[२] स्थितः[३] ॥१५६॥
अध्वनीनो[१]ऽध्वगो[२]ऽध्वन्यः[३] पान्थः[४] पथिक[५]-देशिकौ[६] ।
प्रवासी[७] तद्गणो हारिः[१(५)] पाथेयं[१] सम्बलं[२] समे ॥१५७॥
जङ्घालो[१]ऽतिजवो[२] जङ्घाकरिको[१] जाङ्घिको[२] जवी[१(६)] ।
जवन[२] स्त्वरिते[२] वेगो[१] रयो[२] रंहः[३] तरः[४] स्यदः[५] ॥१५८॥
जवो[६] वाजः[७] प्रसर[८] श्च[(७)] मन्दगामी[१] तु मन्थरः[२(८)] ।
कामङ्गाम्य[१] नुकामीनो[२]ऽत्यन्तीनो[१]ऽत्यन्तगामिनि[२] ॥१५९॥

---

(१) मनोजवसस्ततरचरोयमित्यन्ये यद्वाग्भिः "जनः पितृसधर्म्मा यः सतातार्हो मनोजवः" इति ॥(२) शालारौ शालाराः । दैशिकोऽपि ॥

(३) अन्वेष्टारौ अन्वेष्टारः। अनुपदी अनुपदिनौ अनुपदिनः॥

(४) समर्थस्य चत्वारि । (५) हारिः स्त्री । सम्बलं पुंक्ली ॥

(६) जविनौ जविनः ॥

(७ प्रसरान्तानि वेगनामानि तत्र, रंहसी रंहांसि तरसी तरांसि ॥

(८) मन्दगामिनिद्वयम् ॥

सहायोऽभिचरो[2]ऽनो स्व जीवि[3]-गामि[4]-चर[5]-प्लवाः[6](1)।
सेवको[7]ऽथ सेवा[1] भक्तिः[2] परिचर्य्या[3] प्रसादनं[4] ॥१६०॥
शुश्रूषा[5]-राधना[6]-पास्ति[7]-वरिवस्या[8]-परीष्टयः[9]।
उपचारः[10] पदाति[1]स्तु पत्तिः[2] पद्गः[3] पदातिकः[4] ॥१६१॥
पादातिकः[5] पादचारी[6] पदाजि[7]-पदिका[8]वपि ॥
सरः[3] पुरो-ऽग्रतो-ऽग्रेभ्यः पुरस्तो गम[4] गामि[5]गाः[6](2) ॥१६२॥
प्रष्ठो[7]ऽथा वेशिका[1]-गन्तू[2] प्राघुणो[3](3) ऽभ्यागतो[4] ऽतिथिः[5]।
प्राघूर्णको[6](4) ऽथा वेशिक[1] मातिथ्यं चातिथेय्य[3]पि(5) ॥१६३॥
सूर्य्योढ[1]स्तु स सम्प्राप्तो यः सूर्य्येऽस्तङ्गतेऽतिथिः।
पादार्थं पाद्य[1] मर्घार्थं मर्घ्य[1] वार्य्यथ गौरवम् ॥१६४॥
अभ्युत्थानं[2] व्ययक[1]स्तु स्यान्मर्म्मस्पृग[2] रुन्तुदः[3]।
ग्रामेयको[1] तु ग्रामीण[2] ग्राम्यौ[3] लोको[1] जनः[2] प्रजा[3]॥१६५॥
स्यादा मुष्यायणो[1]ऽमुष्यपुत्रः[2] प्रख्यातवप्तृकः[3]।
कुल्यः[1] कुलीनो[2]ऽभिजातः[3] कौलेयक[4] महाकुलो[5]॥१६६॥
जात्यो[6] गोत्रं[1] तु सन्तानो[2]ऽन्ववायो[3]ऽभिजनः[4] कुलम्[5]।
अन्वयो[6] जननं[7] वंशः[8] स्त्री[1] नारी[2] वनिता[3] वधूः[4] ॥१६७॥
वशा[5] सीमन्तिनी[6] वामा[7] वर्णिनी[8] महिला[9](6)ऽबला[10]।
योषा[11] योषित्[12] विशेषा स्तु (7) कान्ता[1] भीरु[2] नितम्बिनी[3]॥

---

(१) अनुजीवो १ अनुगामी २ अनुचरः ३ अनुप्लवः ४ ॥

(२) पुरःसरः १ अग्रतः सरः २ अग्रेसरः ३ पुरोगमः १ पुरोगामी २ पुरोगः ३ । (३) प्राघूर्ण इति वा । (४) प्राघुर्णिको इति वा ॥

(५) आतिथ्ये वीति स्त्री क्ली, आतिथेयि इति क्लीबे रूपम् ॥

(६) महेलामपि । (७) एकैकम् बोध्यम् ॥

प्रमदा[४] सुन्दरी[५] रामा[६] रमणी[७] ललना[८]ऽङ्गना[९] ।
स्वगुणेनोपमानेन मनोज्ञादिपदेन च ॥१६८॥
विशेषिता-ङ्ग-कर्म्मा स्त्री यथा तरललोचना[१](1) ।
अलसेक्षणा[२] (2)मृगाक्षी[३] मत्तेभगमना[४]ऽपि च ॥१७०॥
वामाक्षी[५] सुस्मिता[६]ऽस्यास्तु मान[१]-लीला[२]-स्मरा[३]-दयः(3)।
लीला[१] विलासो[२] विच्छित्ति[३] र्विब्बोकः[४] किलिकिञ्चितम्[५] ॥१७१॥
मोट्टायितं[६] कुट्टमितं[७] ललितं[८] विहृतं[९] तथा ।
विभ्रम[१०] श्चेत्यलङ्कारा: स्त्रीणां स्वाभाविका दश(4) ॥१७२॥

---

(1) स्वकीयेनासाधारणेन गुणेन यथा तरललोचना अलसेक्षणा इत्यत्र तरलत्वं लोचनस्यासाधारणम्, अलसं वीक्षणं यस्याः अत्र क्रियायाः असाधारणत्वम्, उपमानं यथा मृगाक्षी मत्तेभगमना, मनोज्ञादि पदेन यथा, वामे मनोज्ञे अक्षिणी यस्याः आदिशब्दात् सुस्मितादयः अत्र शोभनत्वे तस्मिन् क्रियायाः विशेषणम् ॥ स्त्रीविशेषणमेकैकम् ॥

(2) तरललोचना इत्यत्र लोचनस्य तरलत्व गुणो विशेषणम् अलसेक्षणा इत्यत्र ईक्षण क्रियायाः अलसत्व गुणः विशेषणम्। मृगाक्षीत्यत्र अक्ष्णः उपमानं मत्तेभगमनेत्यत्र गमनक्रियायाः उपमानम्। वामाक्षीत्यत्र अक्ष्णः वामत्वं मनोज्ञत्वं विशेषणं सुस्मितेत्यत्र स्मितक्रियायाः शोभनत्वं विशेषणम्। एवं स्वगुणेन विशेषिताङ्गा तरललोचना। स्वगुणेन विशेषितकर्म्मा अलसेक्षणा। उपमानेन विशेषिताङ्गा मृगाक्षी। उपमानेन विशेषितकर्म्मा मत्तेभगमना। मनोज्ञपदेन विशेषिताङ्गा वामाक्षी। मनोज्ञपदेन विशेषितकर्म्मा सुस्मिता।

(3) अस्याः स्त्रीया मानोऽभिमानः लीला शृङ्गार चेष्टाविशेषः स्मरः कामः१ ॥

(4) लीलाद्या एकैकं, स्त्रीणां स्वाभाविका लीलाद्या दशालङ्काराः तेषां लक्षणानि ॥ "प्रियस्यानुकृति र्लीलाश्लिष्टा वाग्वेष चेष्टितैः (1)

(१)प्रागल्भ्यौ[१]-दार्य[२]-माधुर्य[३]-शोभा[४]-धीरत्व[५]-कान्तयः[६]।
दीप्ति[७]श्चा यत्नजा भाव[१]-हाव[२]-हेला[३]स्त्रयो ऽङ्गजाः(२)॥१७३॥
सा कोपना भामिनी[१] स्यात् छेकामत्ता च वाणिनी(३)।
कन्या[१] कनी[२] कुमारी[३] च गौरी[१] तु नग्निका[२]ऽरजाः॥१७४॥
मध्यमा[१] तु दृष्टरजा[२] स्तरुणी[३] युवति[४] श्चरी[५]।

---

विलासोऽङ्गे विशेषो यः प्रियाप्रा वासनादिषु (२) मल्लनाद्यादरन्यासो विच्छित्ती रूपदर्पतः (३) विब्बोकोऽभिमतप्राप्तावपि गर्वादनादरः (४) हर्षाद्रुदितगीतादिव्यामिश्रं किलिकिञ्चितम् (५) मोटायितं प्रियं स्मृत्वा साङ्गभङ्ग विजृम्भणम्। "मुठ प्रमर्दने भौवादिकः, मुटत आक्षेपमर्दनयोः तौदादिकः, पुटमुटण् सञ्चूर्णने चुरादिः, एषां मोटः मोटमिवाचरतीति मोटायते इति मोटायितमेकटकारोद्विटकारोऽपि पाठः"(६)दुःखोपचारः सौख्येऽपि हर्षात् कुट्टमितं मतम् (कुट्ट कुत्सनादौ चरादिः,कुट्टमितं लक्ष्याप्रुत्ते कुट्टमितम् अधरादिग्रहणात् दुःखपिवर्धः ) (७) अनाचार्योपदिष्टं स्याल्ललितं रतिचेष्टितम्। मल्लताङ्गन्यासः (८) वक्तव्या भाषणं व्याजाद्विहृतं दर्शितेङ्गितम्। (९) चित्तक्ष्यनवस्थानं शृङ्गारादिभ्रमोमतः। (१०) इत्येवमलंक्रियन्ते एभिरित्यलङ्काराः,स्त्रीणामिति न पुंसां रतिभावाद्धृदयगोचरीभूताद्भवन्ति स्वाभाविकास्ते च दशसंख्याः स्युरिति॥

(१) प्रगल्भस्य प्रौढस्य भावः प्रागल्भ्यं सम्प्रयोगे निर्भयत्वमित्यर्थः॥

(२) भ्रू तारकादीनां बहुविकारो हावः (१) अङ्गस्याल्पोविकारो भावः (२) अङ्गस्य प्रचुरो विकारो हेला (३)।अङ्गजाद्भवोऽलङ्कारा इति भरतः॰"अलङ्कारास्तु नाट्यज्ञैर्ज्ञेया भावरसाश्रयाः। यौवनेऽभ्यधिका स्त्रीणां विकारा वक्त्रगात्रजा" इति। "देहात्मकं भवेत् सत्त्वाद्भावः (१) समुत्थितः। भावात्समुत्थितो हावो (२) हावाद्धेला (३) समुत्थित" इति च स एव॥

(३) छेका चतुरा, मत्ता च उन्मत्ता॥

तलुनी[६] दिक्करी[७] वर्या[१] पतिंवरा[२] स्वयंवरा[३](१) ॥१७५॥
सुवासिनी[१] वधूटी[२] स्यात्(२) चिरिण्ट्य[३]थ सधर्मिणी ।
पत्नी[२] सहचरी[३] पाणिगृहीती[४] गृहिणी[५] गृहाः[६] ॥१७६॥
(३)दाराः[७] क्षेत्रं[८] वधू[९]र्भार्या[१०] जनी[११] जाया[१२] परिग्रहः[१३]
द्वितीयो[१४]ढा[१५] कलत्रञ्च[१६] पुरन्ध्री[१] तु कुटुम्बिनी[२] ॥१७७॥
प्रजावती[१] भ्रातृजाया[२](४) सूनोः स्नुषा[१] जनी[२] वधूः[३] ।
भ्रातृवर्गस्य या जाया यातर[१](५) स्ताः परस्परम् ॥१७८॥
वीरपत्नी[१] वीरभार्या[२] कुलस्त्री[१] कुलबालिका[२](६) ।
(७)प्रेयसी[१] दयिता[२] कान्ता[३] प्राणेशा[४] वल्लभा[५] प्रिया[६] ॥१७९
हृदयेशा[७] प्राणसमा[८] प्रेष्ठा[९] प्रणयिनी[१०] च सा ।
प्रेयस्या[११]-द्याः पुंसी पत्यौ भर्त्ता[२] सेक्ता[३] पति[४]र्वरः[५] ॥१८०
विवोढा[६] रमणो[७] भोक्ता[८] कान्तो[९] वरयिता[१०] धवः[११] ।
जन्या[१] स्तु तस्य सुहृदो विवाहः[१] पाणिपीडनम् ॥१८१॥
पाणिग्रहण[२]मुद्वाह[४] उपात् याम[५]-यमा[६] वपि ॥

---

(१) कन्येति त्रयं सामान्यतः कन्यानामनि गौरीति, इयम् अष्टवर्षीय कन्यानामनि, युवतिस्त्रियां सप्त, विवाहोत्सुकायां त्रीणि ॥

(२) क्षुद्रवधूनामनि इयम् । कलत्रान्तं भार्यायाम् ॥

(३) दाराः पुल्लिङ्गो बहुवचनान्तश्च, एकवचनान्तोऽपि दृश्यते ॥

(४) भ्रातृजायेत्यत्र "ऋतां विद्यायोनिसम्बन्धे" इति षष्ठ्यलोपः दृश्यते भ्रातृजायामित्यादौ सप्तमी समासः । भ्रातृजायापि, यथाह रघुवंशम् "रथात्सुमन्त्र प्रतिपन्न वाहान्ता भ्रातृजायां पुलिनेवताय्यै" इति ॥ (५) 'यातृ' इति शब्दरूपम् 'या' इति भाषा प्रसिद्धिः ॥

(६) पालिका इति १ वा कुलपालिका इत्यमरः २ ॥

(७) प्रेयांसी प्रेयांसः, सान्तः, अन्येऽकारान्ताः सेक्तासेतारौ

दारकर्म[७] परिणयो[८] जामाता[१] दुहितुः पतिः ॥१८२॥
उपपतिस्तु[१] जारः[२] स्यात् भुजङ्गो[१] गणिकापतिः।
जम्पती[१] दम्पती[२] जायापती[३] भार्य्यापती[४] समाः ॥१८३॥
यौतकं[१] (१)युतयोर्देयं सुदायो[२] हरणं[३] च तत्।
कृताभिषेका महिषी[१] भोगिन्यो[१]ऽन्या नृपस्त्रियः ॥१८४॥
सैरन्ध्री[१] याऽन्यवेश्मस्था स्वतन्त्रा शिल्पजीविनी।
असिक्न्यन्तः[१] पुरप्रेष्या दूती[१] सञ्चारिके[२] समे ॥१८५॥
(२)प्राज्ञी[१] प्रज्ञा[२] प्रजानन्त्यां प्राज्ञा[१] तु प्रज्ञयाऽन्विता।
स्यादाभीरी[१] महाशूद्री[२] जातिपुंयोगयोः समे ॥१८६॥
पुंयुज्याचार्य्या[१]ऽऽचार्य्याणी(३) मातुलानी[१] तु मातुली[२]।
उपाध्याया[१]न्युपाध्यायी[२] क्षत्त्रि[१]य्यर्य्यी[१] च शूद्र्यपि[१] ॥१८७॥
स्वत आचार्य्या[१] शूद्रा च(४) क्षत्त्रिया[१] क्षत्त्रियाण्यपि[२]।
(५)उपाध्याय्यु[१]पाध्याया[२] स्यादर्य्या[१]ऽर्य्याणी[२] पुनः समे(६)॥१८८॥
(७)दिधिषू[१]स्तु पुनर्भू[२]र्द्विरूढा स्यात् दिधिषू[१] पतिः(८)।

---

अपि च, प्रेयस्याद्या दश शब्दाः पुंसि वर्त्तमानाः सन्तः पत्यौ भर्त्तरि वर्त्तन्ते, ते यथा, प्रेयान् १ दयितः २ कान्तः ३ प्राणेशः ४ वल्लभः ५ प्रियः ६ हृदयेशः ७ प्राणसमः ८ प्रेष्ठः ९ प्रणयी १०, प्रणयिनौ प्रणयिनः, नाम्नः॥

(१) युतयोर्वधूवरयोर्देयं परिधानवस्त्राभरणादि १॥

(२) पण्डितायाः। प्रजानन्त्याम्॥ (३) आचार्य्यस्त्रियः॥

(४) शूद्रादिजातीयानाम्॥ (५) उपाध्यायो वेदपाठकः॥

(६) अर्य्यस्य वैश्यस्य स्त्री अर्य्या॥

(७) दिधिषौ दिधिषु दिधीषुरित्यपि "ज्येष्ठायां यद्यनूढायां कन्यायामुह्यतेऽनुजा। सा चाग्रे दिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता" २ इति मतान्तरम्॥

(८) दिधिषुः पतिः अग्रे दिधिषुः, हलन्तपाठो युक्तः॥

स तु द्विजो ऽग्रेदिधिषू[1] र्यस्य स्यात्सैव गेहिनी ॥१८९॥
ज्येष्ठे ऽनूढे परिवेत्ता[1] ऽनुजो दारपरिग्रही ।
तस्य ज्येष्ठः परिवित्ति[1] र्जाया तु परिवेदिनी[1(1)] ॥१९०॥
वृषस्यन्ती[1] कामुकी[2] स्या दिच्छायुक्ता तु कामुका[1] ।
(२)कृतसापत्निका[1] ऽध्यूढा[2] धिविन्नाथ[3] पतिव्रता[1] ॥१९१॥
एकपत्नी[2] सुचरित्रा[3] साध्वी[4] सत्य[5] सती[1] त्वरी[2] ।
पुंश्चली[3(3)] चर्षणी[4] बन्धक्य[5] विनिता[6] च पांसुला[7] ॥१९
स्वैरिणी[8] कुलटा[9] (४)याति या प्रियं सा ऽभिसारिका[1] ।
वयस्या[1] ऽलिः[2] सखी[3] सध्री[4]च्यशिश्वी[1] तु शिशुं विना ॥१९
पतिवत्नी[1] जीवत्पति[2] र्विश्वस्ता[1] विधवा[2] समे ।
(५)निर्वीरा[1] निष्पतिसुता जीवत्तोका[1] तु जीवसूः[2] ॥१९४॥
नश्यत्प्रसूतिका निन्दुः[1] सश्मश्रु र्नरमालिनी[1] ।
कात्यायनी[1] त्वर्द्धवृद्धा काषायवसना ऽधवा ॥१९५॥
श्रवणा[1] भिक्षुकी[2] मुण्डा[3] पोटा[1] तु स्त्री नृलक्षणा ।

---

(१) यत्स्मृतिः "येऽग्रजेष्व ऽकृतदारेषु कुर्व्वते दारसंग्रहम् । ज्ञेयाः परिवेत्तारः परिवित्तिस्तु पूर्व्वज" इति । दारपरिग्रही परिणी कलत्रः ॥

(२) कृतं सापत्न्यं सपत्नी भावोऽस्याः सा । "अध्यूढ ईर्ष्या ऽध्यूढा कृतसापत्न्य योषितीति" श्रीधरः । अध्युपरि विन्दत्यस्या इत्यधिविन्ना "विद्लृलाभे" तुदादौ मुचादिः, विन्दतेः परस्य क्त प्रत्ययस्य तकारस्य नित्यं नकारः, नच ष्टुभ्रा ध्यानोऽनुदवित्त्वेति सूत्रे विकल्पः । धर्षणी २ ॥ (३) इत्यपि ॥ (४) नवकुलटा नाम्नि ॥

(५) "रहिता पति पुत्राभ्यां निर्वीरेत्यभिधीयते ।" अवीरा इ मरः जीवन्ती जीवसूः । जीवत्पुत्रा इति वा ॥

साधारणस्त्री[1] गणिका[2] वेश्या[3] पण्यपण्याऽङ्गना[5] [(1)] ॥१९६॥
भुजिष्या[6] लञ्जिका[7] रूपाजीवा[8] वारवधूः पुनः ।
सा वारमुख्या[1]ऽथ चुन्दी[1] कुट्टनी[2] शम्भली[3] समाः ॥१९७॥
पोटा[1] वोटा[2] च चेटी[3] च दासी[4] च कुटहारिका[5] ।
नग्ना[1] तु कोटवी[2] वृद्धा पलिक्न्यथ[1] रजस्वला[1] ॥१९८॥
पुष्पवत्य[2]विरा[3] त्रेयी[4] [(2)] स्त्रीधर्म्मिणी[5] मलिन्य[6]वीः[7] ।
उदक्या[8] ऋतुमती[9] च पुष्पहीना तु निष्कला[1] ॥१९९॥
राका[1] तु सरजाः कन्या स्त्रीधर्म्मः[1] पुष्प[2]मार्त्तवम् ।
रज[4]स्तत्कालस् तु ऋतुः[1] [(3)] सुरतं[1] मोहनं[2] रतम्[3] ॥२००॥
संवेशनं[4] सम्प्रयोगः[5] सम्भोग[6]श्च रहो[7] रतिः[8] ।
ग्राम्यधर्म्मो[9] निधुवनं[10] कामकेलिः[11] पशुक्रिया[12] ॥२०१॥
व्यवायो[13] मैथुनं[14] [(4)] स्त्रीपुंसौ[1] द्वन्द्वं[2] मिथुनं[3] च तत् ।
अन्तर्व्वत्नी[1] गुर्व्विणी[2] स्यात् गर्भवत्यु[3]दरिण्यपि[4] ॥२०२॥
आपन्नसत्त्वा[5] गुर्व्वी[6] च श्रद्धालु[1]र्दौहृदान्विता ।
विजाता[1] च प्रजाता[2] च जातापत्या[3] प्रसूतिका[4] ॥२०३॥
गर्भ[1]स्तु गरभो[2] भ्रूणो[3] दोहदलक्षणं[4] च सः[(5)] ॥
गर्भाशयो[1] जरा[2]यूल्वे[3] कललो[1] ल्व[2] पुनः समे[(6)] ॥२०३॥

---

(1) पण्याङ्गना । पणाङ्गना इत्येवम् ॥

(2) अविरात्रेयी इति वा पाठः । अवी अव्यौ अव्यः इति रूपम् ॥

(3) रजस् क्ली । ऋतुः पुं ॥ (4) चतुर्दश मैथुन नामानि ॥

(5) दोहदलक्षणं क्ली । जरायुः पुं । उल्वः पुं क्ली ॥

(6) शुक्रशोणित सम्पातस्य "सप्ताहं कललं विद्यात् ततः सप्ताह बुद्बुदम् । बुद्बुदाज्जायते पेशी पेशीतोऽपि घनं भवेत्" इत्याचाराङ्ग वृत्तिः ॥

(१)दोहदं[१] दौहृदं[२] श्रद्धा[३] लालसा[४] स्पृहिमाशि तु ।
वैजननो। विजननं[१] प्रसवो[२] नन्दनः[१] पुत्रः ॥२०५॥
उद्वहो[२] ऽङ्गजा[३]-त्मजः[४](२) सूनु[५] स्तनयो[६] दारकः[७] सुतः[८] ।
पुत्रो[९] दुहितरि[१०] स्त्रीत्वे (३)तोका[१]-पत्य[२]-प्रसूतयः[३]॥२०६।
(४)तुक्[४] प्रजो[५] भयो भ्रात्रीयो[१] भ्रातृव्यो[२] भ्रातृ रात्मजे।
स्वस्रीयो[१] भागिनेय[२] श्च जामेयः[३] कुतप[४] श्च सः ॥२०७॥
नप्ता[१] पौत्रः[२] पुत्रपुत्रो दौहित्रो[१] दुहितुः सुतः ।
प्रतिनप्ता[१] प्रपौत्रः[२] स्यात् तत्पुत्र स्तु परम्परः[१](५)॥२०८॥
पैतृष्वसेयः[१] स्यात् पैतृष्वस्रीय[२] स्तुक पितृष्वसुः ।
मातृष्वस्रीय[१] स्तुक् मातृष्वसु मातृष्वसेय[२] वत् ॥२०९॥
(६)विमातृजो वैमात्रेयो[१] द्वैमातुरो[१] द्विमातृजः ।
सत्या स्तु तनये साम्मातुर[१]-व द्रमातुरः[२] ॥२१०॥
सौभागिनेय[१] कानीनौ[२] सुभगा-कन्ययोः सुतौ ।
(७)पौनर्भव[१] पारस्त्रैणेयौ[२] पुनर्भू-परस्त्रियोः ॥२११॥
दास्या दासेर[१] दासेयौ[२] नाटेर[२] स्तु नटीसुतः ।
बन्धुलो[१] बान्धकिनेयः[२](८) कौलटेरो[३] ऽसतीसुतः ॥२१२॥

---

(१) दोहदं क्ली पुं ॥ (२) अङ्गजः १ आत्मजः २ इत्येवम् ॥

(३) स्वार्थिकेऽन्य सूत पुत्र इन्द्रारस्येति विकल्पेन इत्वे, पुत्रिका पक्षे पुत्रका ॥ (४) तु को तकः ॥

(५) "परम्परः प्रपौत्रादौ मृगभेदे परम्परः । परम्परा प्रदीपाद्य सन्तानेऽपि वधे क्वचित् ।" (६) विरुद्धा माता विमाता तस्यां जातः ॥

(७) "पुनरक्षतयो नित्वाह्याक्षते वा यथाविधि । सा पुनर्भूः सुतस्तस्याः पौनर्भव उदाहृत" इति स्मृतिः ॥

(८) असती भिक्षुक सत्योः सुतस्य ॥

स तु कौलटिनेयः[१] स्यात् यो भिक्षुकसतीसुतः[(१)]।
द्वावप्येतौ कौलटेयौ[१] क्षेत्रजो[१] देवरादिजः[(२)] ॥२१३॥
स्वजाते त्वौरसौ[१]-रस्यौ[२] मृते भर्त्तरि जारजः।
गोलको[१] ऽथ मृते कुण्डो[१] भ्राता[१] तु स्यात् सहोदरः[२] ॥२१४
समानोदर्य्य[३]-सोदर्य्य[४]-सगर्भ्य[५]-सहजाः[६] अपि।
सोदर[७] श्च स तु ज्येष्ठः[१] स्यात् पितरः[२] पूर्वजो[३]ऽग्रजः[४] ॥२१५॥
जघन्यजो[१] यविष्ठः[२] स्यात् कनिष्ठो[३]ऽवरजो[४]ऽनुजः[५]।
स यवीयान्[६] कनीयांश्[७] च पितृव्य[१]-श्याल[२१]-मातुलाः[१(३)] ॥२१६
पितुः पत्न्या श्च मातु श्च भ्रातरो देवृ[१] देवरौ[२(४)]।
देवा[३] वा वरजे पत्यु र्जामि[१] स्तु भगिनी[२] स्वसा[३] ॥२१७॥
[(५)]ननान्दा[१] तु स्वसा पत्यु र्ननन्दा[२] नन्दिनी[३] त्वपि।
पत्न्या स्तु भगिनी ज्येष्ठा ज्येष्ठश्वश्रूः[१] कुली[२] च सा ॥२१८॥
कनिष्ठा श्यालिका[१] श्याली[२] यन्त्रणी[३] केलिकुञ्चिका[४]।
केलि[१] र्द्रवः[२] परीहासः[३] क्रीडा[४] लीला[५] च नर्म[६] च ॥२१९॥
देवनं[७] कूर्दनं[८] खेला[९] ललनं[१०] वर्करो[११]ऽपि च।
वप्ता[१] तु जनक[२] स्तातो[३] बीजी[४] जनयिता[५] पिता[६(६)] ॥२२०

---

(१) भिक्षुकी चासौ सती च, भिक्षुकसती "पुंवत्कर्म्मधारये" इति पुंवद्भावः। (२) क्षेत्रे कलत्रे जातः क्षेत्रजः, तत्त्वजस्यापीति केचित् ॥

(३) इति "काका" एकं नाम पितृव्ये "शाला" नाम एकं श्यालके "मामा" नाम एक मातुले ॥

(४) देवा देवरौ देवरः, देवरः देवरौ देवराः, देवा देवानौ देवानः।

(५) ननान्दा ननान्दरौ ननान्दरः। यन्त्रिणी इति पाठे वा, पत्न्यां स्त्री कनिष्ठायाम् ॥

(६) बीजिनौ बीजिनः, "स्त्री क्षेत्रमोषधीपालं बीजो चाम-

पितामहः[1] स्वस्य पिता तत्पिता प्रपितामहः[1]।
मातुर्मातामहा[1]-द्येवं माता[1]ऽम्बा[2] जननी[3] प्रसूः[4] ॥२२१॥
सवित्री[5] जनयित्री[6] च जनिका[1] तु बहुप्रसूः।
धात्री[1] तु स्या दुपमाता[2] वीरमाता तु वीरसूः ॥२२२॥
श्वश्रूः[1] माता पति पत्न्योः श्वशुर स्तु तयोः पिता।
पितर[1] स्तु पितु र्वंश्या मातु र्मातामहाः[1] कुले ॥२२३॥
पितरौ[1] मातापितरौ[2] मातरपितरौ[3] पिता च माता च।
श्वश्रूश्वशुरौ[1] श्वशुरौ[2] पुत्रौ[1] पुत्र श्च दुहिता च ॥२२४॥
भ्राता च भगिनी चापि भ्रातरा[1] वथ बान्धवः[1]।
स्वो[2] ज्ञातिः[3] स्वजनो[4] बन्धुः[5] सगोत्र[6]श्च निजः[1]पुनः ॥२२५॥
आत्मीयः[2] स्वः[3] स्वकीय[4]श्च सपिण्डा[1] स्तु सनाभयः[2]।
तृतीयाप्रकृतिः[1] षण्डः[1] षण्ढ[2] क्लीबो[4] नपुंसकम्[5(1)] ॥२२६॥

इन्द्रियायतन[1] मङ्ग[2]-विग्रहौ[3],
क्षेत्र[4]-गात्र[5]-तनु[6]भूघना[7]-स्तनूः[8]।
मूर्त्तिमत्[9]-करण[10]-काय[11]-मूर्त्तय,[12]
वेर[13]-संहनन[14]-देह[15]-सञ्चराः[16(2)] ॥२२७॥

घनो[17] बन्धः[18] पुरं[19] पिण्डो[20] वपुः[21] पुद्गल[22]-वर्ष्मणी।
कलेवरं[4] शरीरो[25]ऽस्मिन् जीवे कुणपं शवः[2(3)] ॥२२८॥

---

मृतात्मनम्। तत्रयथा नरः स्वामी जन्तु स्तत्र निमिष्यते" इति गरुड़-पुराणम्॥

(१) नपुंसकमिति क्ली॥

(२) तनुः स्त्री, तनूः स्त्री, वेरः पुं क्ली, देहः पुं क्ली॥

(३) पिण्डः पुं क्ली, वपुस् क्ली, वर्ष्मन् क्ली शरीरः पुं क्ली, शवश्च इति

मृतकं[1] रुण्ड[1]-कबन्धौ[2] त्वपशीर्षे क्रियायुजि ।

(1)वयांसि[1] तु दशाः[2] प्रायाः[3] सामुद्रं[1] देहलक्षणम्(2) ॥२२९॥

एकदेशे प्रतीकोऽङ्गा[2]-वयवा[3]-पघना[4] अपि ।

उत्तमाङ्गं[1] शिरो[2] मूर्धा[3] मौलि[4] र्मुण्डं[5] कं[6]-मस्तके[7] ॥२३०॥

वराङ्गं[8] करणत्राणं[9] शीर्षं[10] मस्तिक[11] मित्यपि(3) ।

(4)तज्जाः केशा[1] स्तीर्थवाका[2] श्चिकुराः[3](5) कुन्तलाः[4] कचाः[5] ॥२३१॥

वालाः[6] स्यु स्तत्पराः पाशो[1] रचना[2] भार[3] उच्चयः[4](6) ।

हस्तः[5] पक्षः[6] कलाप[7] श्च केश-भूयस्त्ववाचकाः ॥२३२॥

अलका[1] स्तु कर्कराला:[2] खङ्कर[3] श्चूर्णकुन्तलः[4] ।

---

रूपं, तेन शयसी वशांसी, शवोऽपि। पुं क्ली, मृतशरीरे द्वयं कुणपं शवस्य ॥

(१) कबन्धः पुं क्ली, अपगतम् शीर्षं यस्य अपशीर्षे क्रियायुजि मृतशरीरे इत्यर्थः ॥

(२) "सामुद्रो देहलक्षणे। सामुद्रं च समुद्रीय लवणादिषु भेद्यवत्" इति पुंस्यपि महेश्वरः ॥

(३) शिरः क्ली, मूर्धा पुं, मौलिः पुं स्त्री, मुण्डं पुं क्ली, कं पुं क्ली, मस्तकमपि क्ली पुं ॥

(४) तस्मिञ्छिरसि, तज्जा इति यौगिकसूचनं, तेन शिरसिजाः शिरोरुहाः मूर्धजा इत्यादि ॥

(५) प्राकृते तु कस्य चा देशात् चिउरा इति, संस्कृतेऽपीति केचित् यदाह "कुन्तला मूर्धजा वालाश्चिहुराश्चिकुरा" इति ॥

(६) तेभ्यः केशादिभ्यः परा अमी स्थिताः पाशादयः समूहार्थकाः केशभूयस्त्ववाचका भवन्ति, यथा केशपाशाः १ केशरचना २ केशभारः ३ केशोच्चयः ४ केशहस्तः ५ केशपक्षः ६ केशकलापः ७ एवं कचादिभ्योऽप्येषां यौगिकत्वात् ॥

(1)स तु भाले भ्रमरकः[1] कुन्तलो[2] भ्रमरालकः[3] ॥२३३॥
(2)धम्मिल्लाः[1] संयताः केशाः केशवेशे कवर्य्यथ ।
(3)वेणिः[1] प्रवेणी[2] शीर्षण्य[1]-शिरस्यौ[2] विशदे कचे ॥२३४॥
केशेषु वर्त्म सीमन्तः[1] पलितं[1] (4)पाण्डुरः कचः ।
चूडा[1] केशी[2] केशपाशी[3] शिखा[4] शिखण्डिकाः[5] समाः ॥२३५॥
सा बालानां काकपक्षः[1] शिखण्डक[2]-शिखाण्डकौ[3] ।
तुण्ड[1]मास्यं[2] मुखं[3] (5)वक्त्रं[4] लपनं[5] वदना[6]-नने[7] ॥२३६॥
भालं[1] गोध्य[2]-लिका[3]-लीक[4]-ललाटानि[5] श्रुतिः[1] श्रवः[2] ।
शब्दाधिष्ठानं[3]-पैञ्जूष[4]-महानाद[5]-ध्वनिग्रहाः[6] ॥२३७॥
कर्णः[7] श्रोत्रं[8] श्रवणं[9] च वेष्टनं[1] कर्णशष्कुली[2] ।
पालिस्तु[1] कर्णलतिका[2] शङ्खो[1] भालश्रवोऽन्तरे ॥२३८॥
चक्षु[1]रक्षी[2]-क्षणं[3] नेत्रं[4] नयनं[5] दृष्टि[6]रम्बकम्[7] ।
लोचनं[8] दर्शनं[9] दृक्[10] च तत्तारा[1] तु कनीनिका[2](4) ॥२३९॥
वामं तु नयनं सौम्यं भानवीयं तु दक्षिणम् ।

---

(1) चत्वारि वक्रोन्नत केशनामानि । भालाभिमुखे चेत् तत्र त्र्योऽपि नामानि ॥

(2) "तद्बन्धविशेषाः स्युर्वेणी धम्मिल्लकुन्तलकबर्यः" इति हलायुधः । देफयुक्त पाठोऽपि क्वचित् ॥ (3) वेणिः दीर्घान्तोऽपि ॥

(4) पलित पुं क्ली, । (5) क्ली मुखं पुं क्ली ॥

(5) 'तारकापि, तारकाकर्णीकेति द्व्यक्षरस्याभावः, "तारको दैत्यभिन्नर्णधारयोर्दृक्कितारकम्" । अक्षिकनीनिकायां च तारकापि चेति" "तारकाक्ष्णः कनीनिके" इत्यमरः "तारकातिशयः नक्षत्रा ज्योतिषितीत्वाभावः" इति क्षीरस्वामी॥

(१)ततो श्मश्रु[1] श्मश्रु[1] कूर्चं[2] आस्यलोम[3] च मासुरी[4]।
दाढिका[1] दंष्ट्रिका[2] दाढा[1] दंष्ट्रा[2] जम्भो[3] द्विजा[1] रदाः[2] ॥२४७॥
(२)रदना[3] दशना[4] दन्ता[5] दंशा[6] खादना[7] मल्लकाः[8]।
राजदन्तौ[1] तु मध्यस्थावुपरि(३) श्रेणिकौ[1] क्वचित्(४) ॥२४८॥
रसज्ञा[2] रसना[3] जिह्वा[3] लोला[4] तालु[1] तु काकुदम्[2]।
सुधास्रवा[1] घण्टिका[2] च लम्बिका[3] गलशुण्डिका[4] ॥२४९॥
कन्धरा[1] धमनिः[2] ग्रीवा[3] शिरोधिः[4] च शिरोधरा[5]।
(५)सा त्रिरेखा कम्बुग्रीवा[1] ऽवटुर्घाटा[2] कृकाटिका[3](६) ॥२५०॥
कृक[1]स्तु कन्धरामध्यं कृकपार्श्वे तु वीतनौ[1](७)।
ग्रीवा धमन्यौ (८)प्राग् नीले[1] पश्चान्मन्ये कलम्बिके[2] ॥२५१॥
गलो[1] निगरणः[2] कण्ठः[3](९) काकलक[1]स्तु तन्मणिः।

---

(१) श्मश्रुः पुं स्त्री, श्मश्रु क्ली, कूर्चं पुं क्ली। आस्यलोम आस्यलोमनी आस्यलोमानि। (२) रदना इति स्त्रीलिङ्गं क्लीबलिङ्गञ्च॥

(३) उपरि अधश्च द्वौ द्वौ मध्यस्थौ विचालस्थितावित्यर्थः॥

(४) क्वचिदिति मतान्तरे दन्तपङ्क्तेरुपरि, नत्वधस्तात्, यौ दन्तौ तौ श्रेणिकावित्युच्येते॥

(५) "रेखात्रयाङ्किता ग्रीवा कम्बुग्रीवेति कथ्यते" इति हलायुधः। अवटुः पुं स्त्री। (६) ग्रीवा पश्चाद्भागस्य त्रीणि नामानि॥

(७) कृकस्य ग्रीवामध्यस्य पार्श्वे निकटौ वीतनौ उच्येते इत्यन्वयः पार्श्वशब्दो निकटार्थः क्लीबलिङ्गः, तस्य प्रथमाद्विवचनान्ते कृकपार्श्वे इति॥

(८) प्रागित्यव्ययं ग्रीवायाः पूर्वभागे नीले उच्येते इत्यन्वयः नीले इति प्रथमाद्विवचनम्॥ (९) कण्ठः पुं क्ली। [illegible] "ग्रीवामूले तु कण्ठोऽस्त्रीति क्लीबेत्याह" कंध इत्यपि पुं क्ली॥

भगो[4]ऽपत्यपथो[5] योनिः[6] स्मरमन्दिर[7]-कूपिके[8](1) ॥२७३॥
स्त्रीचिह्न[9]मथ पुंश्चिह्नं[1] मेहनं[2] शेफ[3]-शेपसी[4] ।
शिश्नं[5] मेढ्रं[6] कामलता[7] लिङ्गं[8] च द्वयमप्यदः ॥२७४॥
गुह्य[1]-प्रजनना[2]-पस्था[3](2) गुह्यमध्यं तु सो[1] मणिः[2] ।
सीवनी[1] तदधः सूत्रं स्यादण्डं[1] पेल[2]मण्डकः[3] ॥२७५॥
मुष्को[4]ऽण्डकोशो[5] वृषणो[6]ऽपानं[1] पायु[2] गुदं[3] च्युतिः[4] ।
अधोमर्म[5] शकृद्द्वारं[6] त्रिवलीक[7] वली[8] अपि ॥२७६॥
विटपं[1] तु महापीठ[2]मन्तरा मुष्कवङ्क्षणम्(3) ।
ऊरुसन्धि र्वङ्क्षणः[1] स्यात् सक्थ्यूरु[2]स्तस्य पर्व तु ॥२७७॥
जानु[1]र्नलकीलो[2]ऽष्ठीवान्[3] पश्चाद्भागोऽस्य मन्दिरः[1] ।
कपोली[1]त्वग्रिमो जङ्घा[1] प्रसृता[2] नलकिन्य[3]पि ॥२७८॥
प्रतिजङ्घा[1] त्वग्रजङ्घा[2] पिण्डिका[1] तु पिचण्डिका[2] ।
गुल्फ[1]स्तु चरणग्रन्थि[2]र्घुटिको[3] घुण्टको[4] घुटः[5] ॥२७९॥
चरणः[1] क्रमणः[2] पादः[3] पदो[4](4)ऽङ्घ्रि[5]श्चलनः[6] क्रमः[7] ।
पादमूलं[1] गोहिरं[2] स्यात् पार्ष्णि[1]स्तु घुटयोरधः ॥२८०॥
पादाग्रं[1] प्रपदं[2] क्षिप्रं[1] त्वङ्गुष्ठाङ्गुलिमध्यतः(5) ।

---

(1) स्मरमन्दिरः १ स्मरकूपिका २ ॥

(2) "उपस्थं त्वजनुपस्थोऽस्त्री" इति क्लीबेऽप्याह वैजयन्ती ॥

(3) मुष्कवङ्क्षणमिह क्लीबलिङ्गं द्वितीयैकवचनं तथाह वाग्भटः मुष्कवङ्क्षणयोर्मध्ये विटपं कटतारकम्" इति ॥

(4) पद् पाद् पदौ पादः। "पत् पादमङ्घ्रिश्चरणोऽस्त्री" इति व्याडिः ॥

(5) अंगुष्ठश्च अंगुलयश्च अंगुष्ठांगुलयः तासां मध्यं तस्मात् आद्या-र्थ इति सप्तम्यर्थेतसु प्रत्ययः ॥

कूर्चं[1] शिरस्कौ पश्यं [illegible][1] कूर्चशिरः[2] समे ॥२८१॥
तलहृदयं[1] तु तलं[2] मध्ये पादतलस्य तत् ।
तिलकः[1] कालकः[2] पिप्लु[3] र्जटुल[4] स्तिलकालकः[5](1) ॥२८२॥
(2)रसा[1]-सृङ्[2]-मांस[3]-मेदो[4]ऽस्थि[5]-मज्ज[6]-शुक्राणि[7] धातवः ।
सप्तैव दश वैकेषां रोम[8]-त्वक्[9]-स्नायुभिः[10] सह ॥२८३॥
रस[1] आहारतेजो[2]ऽग्निसम्भवः[3] षड्रसासवः[4] ।
आग्नेयो[5]ऽसृक्करो[6] धातु[7] र्घन-मूल-महा-परः(3) ॥२८४॥
रक्तं[1] रुधिरं[2] माग्नेयं[3] विस्रं[4] तेजो[5]-भवे[6] रसात्(4) ।
शोणितं[7] लोहित[8]मसृग्[9](5) वाशिष्टं[10] प्राणदा[11]ऽसुरे[12] ॥२८५॥
क्षतजं[13] मांसकार्य्यं[14]ऽस्रं[15] मांसं[1] पललं[2] जङ्गलं[3] ।
रक्त तेजो[4]-(6)भवे[5] क्रव्यं[6] काश्यपं[7] तरसा[8]-मिषे[9] ॥२८६॥
मेदस्कृत्[10](7) पिशितं[11] कीनं[12] पलं[12] पेश्य[1]स्तु(8) तल्लताः ।

---

(1) जटुल इति पाठोऽपि । तिलकालोऽपि ॥

(2) धातुनामैकैकम् ॥

(3) घनधातुः २ मूलधातुः २ महाधातुरिति ॥

(4) रसतेजसी रसतेजांसि, रसतेजः १ रसभवम् २ ॥

(5) असृक् असृग् असृजी असृञ्जि, शसादौ दन्पादनासिके-त्यादिना विकल्पेन असन् इत्यादेशे असानि असृञ्जि, असृजा अस्ना, असभ्याम् असृग्भ्याम्, असभिः असृग्भिः, असृजे अस्ने, असृजः अस्नः २, असृजोः अस्नोः २, असृजाम् अस्नाम्, असृजि अस्नि असनि, असृक् [illegible] इति वा पाठः ॥

(6) रक्ततेजसी रक्ततेजांसि, रक्ततेजः १ रक्तभवम् २ ॥

(7) मेदस्कृति मेदस्कृती ॥ [illegible]

(8) इकारान्तोऽपि पेशिः पेशी ॥ [illegible]

(१)मज्जा[1] तु कौशिकः[2] शुक्रकरो[3]ऽस्थिस्नेहो[4]ऽस्थिसम्भवः[5](२) ॥२८२॥
शुक्रं[1] रेतो[2](३) बलं[3] बीजं[4] वीर्यं[5] मज्जासमुद्भवम्[6] ।
आनन्दप्रभवं[7] पुंस्त्वम्[8] इन्द्रियं[9] किट्टवर्जितम्[10] ॥२८३॥
पौरुषं[11] प्रधानधातु[12]र्लोम[1] रोम[2] तनूरुहम्[3] ।
त्वक्[1] छवि[2]श्छादनी[3] कृत्ति[4]श्चर्मा[5]जिन[6]मसृग्धरा[7] ॥२८४॥
वस्नसा[1] तु स्नसा[2] स्नायु[3]र्नाड्यो[1] धमनयः[2] सिराः[3] ।
कण्डरा[1] तु महास्नायु[1]र्मलं[1] किट्टं[2](४) शरीरजम् ॥२८५॥
दूषीका[1] दूषिका[2] नैत्रं कुलुकं[1] पिप्पिका[1] पुनः ।
दन्त्यं कार्णं तु पिञ्जूषः[1] शिङ्घाणो[1] घ्राणसम्भवः ॥२८६॥
सृणीका[1] स्यन्दिनी[2] लाला[3]ऽस्यासवः[4] कफकूर्चिका[5](५) ।
मूत्रं[1] वस्तिमलं[2] मेहः[3] प्रस्रावो[4] नृजलं[5] स्रवः[6] ॥२८७॥
शुम्भिका[1] तु लिङ्गमलं विड्[1](६) विष्ठा[2]ऽवस्करः[3] शकृत्[4] ।
गूथं[5] पुरीषं[6] शमलो[7]-च्चारो[8] वर्चस्कं[9]-वर्चसी[10] ॥२८८॥

---

(१) मज्जानौ मज्जानः, वाचस्पतिस्तु "अथ मज्जा द्वयो"रिति स्त्रियामप्याह, तदाभिदादित्वादङि मज्जा आवमः कौशिकः ॥

(२) अस्थिस्नेहः १ अस्थिसम्भवः २ अस्थितेजोऽपि ॥

(३) रेतसी रेतांसि ॥

(४) "किट्टं मलोऽस्त्रिया" मित्यमरः ॥

(५) लाला नामानि पञ्च ॥

(६) विट् स्त्री, विषौ विषः, वैजयन्तीकारस्तु "उच्चारो विट् मला" इति क्लीबेऽप्याह तदा विषी वींषि । "विट् विष्ठे स्त्रियाम्" इत्यमरः, विट् विषौ विषः, शकृती शकृन्ति शसादौ दत्त्वादनादिश्चेति विकल्पेन शकन् आदेशे शकानि शक्ना शकता शक्भ्यां शकृद्भ्यामित्यादि ॥

क्षौमं¹ कार्पासं²-कौशेयं³-राङ्कवादि⁴ विभेदतः ।

(१)क्षौमं¹ दुकूलं² दुगूलं³ स्यात् कार्पासं¹ तु बादरम्² ॥२३३॥

कौशेयं¹ (२)कृमिकोशोत्थं² राङ्कवं¹ मृगरोमजम्² ।

कम्बलः¹(३) पुनः ऊर्णायु²राविकौ³-रल्ल⁴-रल्लकाः⁵ ॥२३४॥

नवं¹ वासो ऽनाहतं² स्यात् तन्त्रकं³ निष्प्रवाणि⁴ च ॥

प्रच्छादनं¹ प्रावरणं² संव्यानं³ चोत्तरीयकम् ॥२३५॥

वैकक्षं¹ प्रावारो²-त्तरासङ्गौ³ बृहतिका⁴ ऽपि च ।

वराशिः¹ स्थूलशाटः² स्यात् परिधानं¹ त्वधोंशुकम्² ॥२३६॥

अन्तरीयं³ निवसनम्⁴ उपसंव्यान⁵ मित्यपि ।

तद्ग्रन्थिरुच्चयो¹ नीवी² वरस्त्र्यर्द्धोरुकांशुकम् ॥२३७॥

चण्डातकं¹ चलनकं² चलनी¹ त्वि तरस्त्रियाः ।

चोलः¹ कञ्चुलिका² कूर्पासको³ ऽङ्गिका⁴ च कञ्चुके⁵ ॥२३८॥

शाटी¹ चोलश्च² नीशारो¹ हिमवातापहांशुके ।

कक्षा¹ कच्छाटिका² (४)कक्षा³ परिधाना-पराञ्चले ॥२३९॥

कक्षापटः¹ तु कौपीनं² समौ नक्तक¹-कर्पटौ² ।

निचोलः¹ प्रच्छदपटो² निचुल³श्चोत्तरच्छदः⁴ ॥२४०॥

---

(१) "बादरं [illegible]" इत्यमरः, [illegible] वस्त्रात्मको जातम् आदिमत्त्वात् बादरादीति क्षीरस्वामी, [illegible] निष्पन्नं [illegible] इति [illegible] । क्षौमं दुकूलशब्दौ सूक्ष्मवस्त्रवाचकौ अपि ॥

(२) पट्टोऽपि कौशेयवाची पट्टशब्दस्य पुंस्त्वपुं.लिं. [illegible] [illegible] टीका ।

(३) कम्बलः पुं. क्ली. स्त्रियां कम्बली महीपदः ।

(४) कच्छाटिका इति च पाठः ।

उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते ।
वस्त्रमाल्यादि तत् पूर्णपात्रं[1] पूर्णानकं[2] च तत् ॥३४१॥
तत् स्यादाप्रपदीनं[1] तु व्याप्नोत्याप्रपदं हि यत् ।
(१)चीवरं[1] भिक्षुसङ्घाटी[2] जीर्णवस्त्रं पटच्चरम्[1] ॥३४२॥
शाणी[1] गोणी[2] छिद्रवस्त्रे जलार्द्रा[1] क्लिन्नवाससि ।
पर्य्यस्तिका[2] परिकरः[2] पर्य्यङ्क[3] स्यादवसक्थिका[4] ॥३४३॥
(२)कुथो[1] वर्णः[2] परिस्तोमः[3] प्रवेणी[4]-नवता[5]-ऽऽस्तराः[6] ।
अपटी[1] काण्डपटः[2] स्यात् प्रतिसीरा[3]जवन्यपि[4](३) ॥३४४॥
तिरस्करिण्य[5]थो ल्लोचो[1] वितानं[2] कदको[3]ऽपि च ।
चन्द्रोदयो[4](४) स्थूलं[1] दूष्यं[2] केणिका पटकुट्यपि ॥३४५॥
गुणालयनिकायां[2] स्यात् संस्तर[1]-स्रस्तरौ[2] समौ(५) ।
तल्पं[1] शय्या[2] शयनीयं[3] शयनं[4] तलिमं[5](६) च तत् ॥३४६॥
मञ्च[1]-मञ्चक[2]-पर्य्यङ्क[3]-पल्यङ्काः[4] खट्वया[5] समाः ।
उच्छीर्षक[1]मुपाधान[2]-बर्हौ[3] पाले[1] पतद्ग्रहः[2] ॥३४७॥
प्रतिग्राहो[2](७) मुकुरा[1]-त्मदर्शा[2]-दर्शा[3]स्तु दर्पणः[4] ।

---

(१) वृद्धमुनिजनाच्छादनस्य ॥

(२) सामान्येन गजाद्युपरि सभाभूमौ वा आस्तरणस्य "झुल-कालिम्" इति भाषा ॥

(३) यवनिकाऽपि । पश्चं प्रच्छादनपटे "परदा" इति यस्य प्रसिद्धिः ॥

(४) वस्त्रगृहस्य ॥

(५) मल्लवादिरचितशय्या ॥

(६) तलिमम् इति वा ॥

(७) भृङ्गारोऽपि ॥

स्याद्वेत्रासन[1] मासन्दी[2](1) विष्टरः[1] पीठ[2] मासनम्[3] ॥३४८॥
कशिपु[1] र्भोजनाच्छादौ वीध्रीरं[1] शयनासने ॥
लाक्षा[1] द्रुमामयो[2] राक्षा[3] रङ्गमाता[4] पलङ्कषा[5] ॥३४९॥
जतु[6] क्षतघ्ना[7] क्रिमिजा[8] यावो[1] लक्तो[2] तु तद्रसः ।
अञ्जनं[1] कज्जलं[2] दीपः[1] प्रदीपः[2] कज्जलध्वजः[3] ॥३५०॥
स्नेहप्रियो[4] गृहमणि[5] र्दशाकर्षो[6] दशेन्धनः[7] ।
व्यजनं[1] तालवृन्तं[2] तत् पवित्रं[1] मृगचर्मणः ॥३५१॥
आलावर्त्तं[1] तु वस्त्रस्य कङ्कतिः[1] केशमार्जनः[2] ।
प्रसाधनः[3] स्यादथ बालक्रीडनके[1] गुडो[2] गिरिः[3] ॥३५२॥
गिरियको[4] गिरिगुडः[5] समौ कन्दुक[1]-गेन्दुकौ[2] ।
राजा[1] राट्[2] पृथिवीशक्र[3]-मध्यलोकेश[4]-भूभृतः[5] ॥३५३॥
महीक्षित्[6] पार्थिवो[7] मूर्द्धाभिषिक्तो[8] भूप्रजा-नृपः[9](2) ।
(3)मध्यमो[1] मण्डलाधीशः[2] सम्राट्[1] तु शास्ति यो नृपान् ॥३५४॥
(4)यः सर्वमण्डलस्येशो राजसूयं(5) च योऽयजत् ।
चक्रवर्त्ती[1] सार्वभौमः[2] स तु (6)द्वादश भारते ॥३५५॥
आर्षभि[1] र्भरत[2] स्तत्र सगर[1] स्तु सुमित्रभूः[2] ।

---

(1) आसन्दी स्त्री पुंलिङ्गः इति हलायुधटीका "कद्रूत" इत्यपि ॥

(2) भूपः, प्रजापः, नृपः यौगिकत्वात् भूपालः, लोकपालः नरपाल इत्यादयः ॥

(3) अपेतसमस्तापेक्षया सामान्यः ॥

(4) द्वादश राजचक्रस्य ॥

(5) राजसूयं यज्ञविशेषम् ।

(6) [illegible] आदिश्याद्या ब्रह्मदत्तपर्यन्ता द्वादश ॥

आनन्दो[६] नन्दनः[७] पद्मो[८] रामो[९] विष्णुद्विष[१] स्त्वमी(१) ॥३६२॥
(२)अश्वग्रीव[१] स्तारक[२] श्च मेरको[३] मधु[४] रेव च ।
निशुम्भ[५]-बलि[६]-प्रह्लाद[७]-लङ्केश[८]-मगधेश्वराः[९] ॥३६३॥
(३)जिनैः सह त्रिषष्टिः स्युः शला[२]कापुरुषा[१] अमी ।
आदिराजः[१] पृथु[२] र्वैन्यो[३] मान्धाता[१](४) युवनाश्वजः[२] ॥३६४॥
धुन्धुमारः[१] कुवलाश्वो[२] हरिश्चन्द्र[१] स्त्रिशंकुजः[२] ।
(५)पुरूरवा[१] बौध[२] ऐल[३] उर्वशीरमण[४] श्च सः ॥३६५॥
दौष्मन्ति[१] र्भरतः[२] सर्वदमनः[३] शकुन्तलात्मजः[४] ।
हैहय[१] स्तु कार्तवीर्यो[२] दोःसहस्रभृ[३] दर्जुनः[४] ॥३६६॥
कौशल्यानन्दनो[१] दाशरथी[२] रामो[३] ऽस्य तु प्रिया ।
वैदेही[१] मैथिली[२] सीता[३] जानकी[४] धरणीसुता[५] ॥३६७॥

---

(१) अमी वक्ष्यमाणा अश्वग्रीवादयो नव विष्णूनां प्राजापत्यादीनां वासुदेवानां यथाक्रमं द्विषः प्रतिपक्षाः ॥

(२) एकैकम् ॥

(३) उपसंहारमाह जिनैरिति जिनैस्तीर्थङ्कर ऋषभादिभिश्चतुर्विंशत्या सह मीलिता अमी भरतादयो द्वादश चक्रवर्तिनः-प्राजापत्यादयो नव वासुदेवाः अचलादयो नव बलदेवाः-अश्वग्रीवाद्या नव प्रतिवासुदेवाश्चेति सर्वे मिलिता त्रिषष्टिः स्युः, ते च शलाका पुरुषाः पुरुषेषु जातिविशेषेण प्रख्याः ॥

(४) मान्धातादयो मान्धातारः, एते मान्धातृप्रमुखाः षडप्यमी चक्रवर्तित्वेन प्रसिद्धाः । यदाह "मान्धाता १ धुन्धुमारश्च २ हरिश्चन्द्रः ३ पुरूरवाः ४ भरतः ५ कार्तवीर्यश्च ६ षडेते चक्रवर्तिनः ॥"

(५) पुरूरवाः पुरूरवसौ पुरूरवसः ॥

बृहन्नटो[२] (१)गुडाकेशः[३] सुभद्रेशः[४] कपिध्वजः[५] ॥३७३॥
बीभत्सुः[६] कर्णजित्[७] तस्य गाण्डीवं[१] गाण्डिवं[२] धनुः ।
पाञ्चाली[१] द्रौपदी[२] कृष्णा[३] सैरन्ध्री[४] नित्ययौवना[५] ॥३७४॥
वेदिजा[६] याज्ञसेनी[७] च कर्ण[१]श्चम्पाधिपो[२]ऽङ्गराट्[३] ।
राधा[४]-सूता-र्क[५]-तनयः[६](२) कालपृष्ठं[१] तु तद्धनुः ॥३७५॥
(३)श्रेणिक[१]स्तु भम्भासारो[२] हालः[१] स्यात् सातवाहनः[२](४) ।
कुमारपाल[१]श्चौलुक्यो[२] राजर्षिः[३] परमार्हतः ॥३७६॥
मृतस्वमोक्ता[५] धर्मात्मा[६] मारिव्यसनवारकः[७] ।
राजबीजी[१](५) राजवंश्यो[२] बीज्य[१]-वंश्यौ[२] तु वंशजे ॥३७७॥
स्वाम्य[१]मात्यः[२] सुहृत्[३] कोशो[४] राष्ट्र[५]-दुर्ग[६]-बलानि[७] च ।
(६)राज्याङ्गानि प्रकृतयः[१](७) पौराणां श्रेणयोऽपि च ॥३७८॥
तन्त्रं[१] स्वराष्ट्रचिन्ता स्यादावाप[१]स्त्वरिचिन्तनम् ।

---

(१) बृहन्नासौ नटश्चेति बृहन्नटः, विराटगृहे छद्मना नाट्याचार्योऽयमभूदिति प्रसिद्धिः ॥

(२) राधातनयः सूततनयः अर्कतनयः ॥

(३) राजविशेषाणाम् ॥

(४) कुन्तलराजविशेषे हालः स्यादित्यर्थः, सातं दत्तं सुखं वाहनमस्य सातवाहनः शालवाहन इत्यपि ॥

(५) राजबीजिनौ राजबीजिनः ॥

(६) स्वामी प्रभुः, अमात्यो मन्त्री, सुहृत् मित्रम् । कोशो भाण्डागारः, राष्ट्रं जनपदः, दुर्गं कोट्टः ( कोटगढ़ इत्यादि भाषा ) बलं सैन्यम् । राज्याङ्गमेकैकं ज्ञेयम् ॥

(७) "अमात्याद्याः पौराश्च श्रेणयः प्रकृतयः स्मृताः" इति माद्दिकाः ॥

स्थालाजिरो[1] वर्द्धमानः[2] शरावः[3] कोशिका[1(1)] पुनः ।
मल्लिका[1] चषकः[2] कंसः[4] पारी[5] स्यात् पानभाजनम्[6] ॥८०॥
कुतू[1] चर्म्मस्नेहपात्रं कुतुप[1] स्तु तदल्पकम् ।
दृतिः[1] खल्ल[2] श्चर्म्ममयी त्वालुः करकपात्रिका[1] ॥८१॥
सर्व्वं मावपनं[1] भाण्डं[2] पात्रा[1]-ऽमत्रे[2] तु भाजनम्[4] ।
तद्विशालं[1] पुनः स्थालं स्यात् पिधान[1] मुदञ्चनम्[2] ॥८२॥
शैलो[1] ऽद्रिः[2] शिखरी[3] शिलोच्चय[4]-गिरी[5] गोत्रो[6] ऽचलः[7]
सानुमान्[8],ग्रावा[9(2)] पर्व्वत[10]-भूभृ[11]-भूधर[12]-धरा[13]हार्य्यौ[14]
नगो[15] ऽथो दयः[1] ।
पूर्व्वाद्रि[2]श्चरमाद्रि[1]रस्त[2]उदगद्रि[1]स्त्व द्रिराण्[2] मेनकाप्राणेशो[3]
हिमवान्[4] हिमालय[5]-हिमप्रस्थौ[6] भवानीगुरुः[7] ॥८३॥
हिरण्यनाभो[1] मैनाकः[2] सुनाभ[3] श्च तदात्मजः ।
रजताद्रि[1]स्तु कैलासो[2] ऽष्टापदः[3] स्फटिकाचलः[4] ॥८४॥
क्रौञ्चः[1] क्रुञ्चो[2] ऽथ मलय[1] आषाढो[2] दक्षिणाचलः[3] ॥
स्यान्माल्यवान्[2(3)] प्रस्रवणो[2] विन्ध्य[1]स्तु जलवालकः[2] ॥८५॥
शत्रुञ्जयो[1] विमलाद्रि[2] रिन्द्रकील[1] स्तु मन्दरः[2]
सुवेलः[1] स्यात् त्रिमुकुट[2] स्त्रिकूट[3] स्त्रिककु[4]च्च सः ॥८६॥
उज्जयन्तो[1] रैवतकः[2] सुदामः[1] पारियात्रिकः[2] ।
लोकालोक[1]श्चक्रवालो[2]ऽथ मेरुः[1] कर्णिकाचलः[2] ॥८७॥

---

(१) कौशिका इति माधः ॥

(२) सानुमन्तौ सानुमन्तः, ग्रावाणौ ग्रावाणः ॥

(३) माल्यवन्तौ माल्यवन्तः ॥

रत्नसानुः[3] सुमेरु[4] स्व-स्वर्गि[5]-काञ्चनतो[6] गिरिः[7(1)] ॥
शृङ्गं[1]तु शिखरं[2]कूटं[3]प्रपात[1]स्तु तटो[2] भृगुः[3] ॥९८॥
मेखला[1] मध्यभागोऽद्रे र्नितम्बः[2] कटक[3] श्च सः ।
दरी[1]स्यात् कन्दरो[2]ऽखातबिले तु गह्वरं[1] गुहा[2] ॥९९॥
द्रोणी[1] तु शैलयोः सन्धिः पादाः[1] पर्य्यन्तपर्व्वताः ।
दन्तका[1]स्तु बहि स्तिर्य्यक् प्रदेशा निर्गता गिरेः ॥१००॥
अधित्यको[1] र्द्ध्वभूमिः स्या दधोभूमि रुपात्यका[1] ।
स्नुः[1] प्रस्थं[2] सानु[3]रश्मा[1]तु पाषाणः[2]प्रस्तरो[3]दृषत्[4(2)] ॥१०१॥
ग्रावा[5]शिलो[6]पलो[7]गण्डशैलाः स्थूलोपला श्च्युताः ॥
स्या दाकरः[1]खनिः[2]खानि[3]र्गञ्जा[4] धातु[1]स्तु गैरिकम्[1] ॥१०२॥
शुक्लधातौ[1]पाकशुक्ला[2] कठिनी[3] खटिनी[4] खटी[5] ।
लोहं[1] कालायसं[2] शस्त्रं[3] पिण्डं[4] पारशवं[5] घनम्[6] ॥१०३॥
गिरिसारं[7] शिलासारं[8]तीक्ष्णं[9]कृष्णामिषो[10]ऽयः[11] ।
सिंहाण[1]-धूर्त्त[2]-मण्डूर[3]-मराण्य[4] स्य किट्टके ॥१०४॥
सर्व्वं च तैजसं लोहं[(3)] विकार स्त्वयसः कुशी[1] ।
ताम्रं म्लेच्छमुखं[2]शुल्वं[3]रक्तं[4]द्यष्टं[5] सुदुम्बरम्[6] ॥१०५॥
[(4)]म्लेच्छ[7]-शावर[8]-भेदाख्यं मर्कटास्यं[9] कनीयसम्[10] ।

---

(१) स्वर्गिरिः १ स्वर्गिगिरिः २ काञ्चनगिरिः ३ ॥

(२) दृषदौ दृषदः ॥

(३) सुवर्णं १ रजतं २ ताम्रं ३ रीतिः ४ कांस्यं ५ तथा त्रपु ६ सीसं ७ च धीवरं ८ चैव अष्टौ लोहानि चक्षते ॥

(४) शवरभेदाख्यम् इति वा ॥

मल्लनार्द्धनं[11] वरिष्टं[12] सीसं[1] तु सीसपत्रकम्[2] ॥१०६॥
नागं[3] गण्डूपदभवं[4] वप्रं[5] सिन्दूरकारणम्[6]।
(1)वर्धं[7] स्वर्णारि[8]-योगेष्टे[9] यवनेष्टं[10] सुवर्णकम्[11] ॥१०७॥

वङ्गं[1] त्रपु:(2) स्वर्णजं[3]-नागजीवने[4]
मृद्वङ्ग[5]-रङ्गे[6] गुरुपत्र[7]-पिच्चटे[8]।
स्याच्चक्रसंज्ञं[9] तमरं[10] च नागजं[11]
कस्तीर[12] आलीनक[13]-सिंहले[14] अपि ॥१०८॥

स्यात् रूप्यं[1] कलधौत[2]-तार[3]-रजत[4]-श्वेतानि[5] दुर्वर्णकं[6]
खर्जूरं[7] च हिमांशु[8]-हंस[9]-कुमुदा[10]-भिख्यं(3) सुवर्णं[1] पुन:।
स्वर्णं[2] हेम[3](4) हिरण्य[4]-हाटक[5]-वसून्य[6]ष्टापदं[7] काञ्चनं[8]
कल्याणं[9] कनकं[10] महारजत[11]-रै[12]-गाङ्गेय[13]-रुक्माण्य[14]पि ॥१०९॥

कलधौत[15]-लोहोत्तमा[16]ग्निबीजा[17]
न्यपि गारुडं[18] गैरिका[19]-जातरूपे[20]।
तपनीय[21] चामीकर[22]-चन्द्र[23]-भर्मा[24](5)-
ऽर्जुन[25]-निष्क[26]-कार्तस्वर[27]-कर्बुराणि[28] ॥११०॥

जाम्बूनद[29]-शातकुम्भं[30] रजतं[31] भूरि[32]-भूत्तमम्[33]।

---

(१) वर्ध इति वा ॥

(२) त्रपुषी त्रपूंषि, उकारान्तोऽपि त्रपु त्रपुणी त्रपूणि ॥

(३) हिमांशु-हंस-कुमुदानामभिख्या नाम यस्य तत्तथा चन्द्राह्वयं १ हंसाह्वयं २ कुमुदाह्वयं ३ इत्यादि योज्यम् ॥

(४) हेम हेम्नी हेमानि नान्तः अकारान्तोऽपि कुलवत् ॥

(५) भर्म भर्मणी भर्माणि नान्तः अकारान्तोऽपि कुलवत् भर्मं भर्मे भर्माणि ॥

हिरण्य[1]-कोशे[2]-कुप्यानि (1) हेम्नि रूप्ये कृता-कृते ॥१११॥
कुप्यन्तु तद्द्वयादन्य द्रूप्य[1] न्तु द्वय (2) माहतम् ।
अलङ्कारसुवर्णं[1] तु (3) शृङ्गीकनक[2] मायुधम्[3] ॥११२॥
रजतं च सुवर्णं च संश्लिष्टे घनगोलकः[1] ।
पित्तलः[1] रे[2] ऽथारकूटः[1] कपिलोहं[2] सुवर्णकम्[3] ॥११३॥
रिरी[4] रीरी[5] च रीति[6] श्च पीतलोहं[7] सुलोहकम्[8] (4) ।
ब्राह्मी[1] तु राज्ञी[2] कपिला[3] ब्रह्मरीति[4] र्महेश्वरी[5] (5) ॥११४॥
कांस्यं[1] विद्युत्प्रियं[2] घोषः[3] (6) प्रकाशं[4] वङ्गशुल्वजम्[5] ।
घण्टाशब्द[6] मसुराह्वं[7] रवणं[8] लोहजं[9] मलम्[10] ॥११५॥
सौराष्ट्रके[1] पञ्चलोहं[2] (7) वर्त्तलोहं[1] तु वर्त्तकम्[2] ।
पारदः[1] पारतः[2] सूतो[3] हरबीजं[4] रस[5] श्चलम्[6] ॥११६॥
अभ्रकं[1] स्वच्छपत्रं[2] ख[3] (8) मेघाख्यं[4] गिरिजामले[5] ।

---

(1) सामान्येन द्रव्याभरणाद्युत्कृष्टधनस्य, घटिता घटित हेम रूप्ययोः कुप्यं रूप्यम् ॥

(2) द्वयं कुप्यमकुप्यं च आहतं ताडितं रूप्यं स्यात् । आहत रूप्योत्पन्नो लोके रुपैया इति ख्यातः । तथा पैसा इति चान्यः ॥

(3) कुन्दन इति प्रसिद्धः ॥

(4) पित्तलभेदस्य सुवर्णसदृशस्य ॥

(5) पीतरक्त पित्तलस्य ॥

(6) घोष इति वा, अतिशुद्धकांस्यम् ॥

(7) पञ्च ताम्र रीति त्रपु सीसक कालायस लक्षणानि लोहानि यस्मिन् । कांस्यभेदः । भाङ्गार्कासा कांसी इति भाषा ॥

(8) खस्याकाशस्याभिख्याऽस्य तेन खं गगनं इत्यादि तथा मेघाख्यं मेघः अम्बुदः इत्यादि गिरिजामले इति सप्तम्येकवचनान्तम् ॥

स्रोतोऽञ्जनं[1] तु कापोतं[2] सौवीरं[3] कृष्ण[4]-यामुने[5] ॥११७॥
अथ तुत्थं[1] शिखिग्रीवं[2] तुत्थाञ्जन[3]-मयूरके[4] ।
मूषातुत्थं[1] कांस्यनीलं[2] हेमतारं[3] वितुन्नकम्[4] ॥११८॥
स्यात् तु कर्परिकातुत्थ[1] ममृतासङ्ग[2] मञ्जनम्[3] ।
रसगर्भं[1] तार्क्ष्यशैलं[2] तुत्थे दार्वीरसोद्भवे ॥११९॥
पुष्पाञ्जनं[1] रीतिपुष्पं[2] पौष्पकं[3] पुष्पकेतु[4] च(1) ।
माक्षिकं[1] तु कदम्बः[2] स्यात् चक्रनामा[3] ऽश्मनामकः[4] ॥१२०॥
ताप्यो[1] नदीजः[2] कामारि[3] स्तारारि[4]र्विटमाक्षिकः[5] ।
सौराष्ट्री[1] पार्वती[2] काक्षी[3] कालिका[4] पर्पटी[5] सती[6] ॥१२१॥
आढकी[7] तुवरी[8] कंसोद्भवा[9] काच्छी[10] मृदा[11]-ह्वया(2) ।
कासीसं[1] धातुकासीसं[2] खेचरं[3] धातुशेखरम्[4] ॥१२२॥
द्वितीयं पुष्पकासीसं[1] कंसकं[2] नयनौषधम्[3] ।
गन्धाश्मा शुल्व[2]-पामा[3]-कुष्ठा-रि[4](3) र्गन्धिक[5] गन्धकौ[6] ॥१२३॥
सौगन्धिकः[7] शुकपुच्छो[8] हरितालं[1] तु पिञ्जरम्[2] ।
त्रिखालकं[3] विस्रगन्धि[4] खर्जूरं[5] वंशपत्रकम्[6] ॥१२४॥
आल[7]-पीतन[8]-तालानि[9] गोदन्तं[10] नटमण्डनम्[11] ।
वङ्गारि[12]र्लोमहृ[13]च्चाथ मनोगुप्ता[1] मनःशिला[2] ॥१२५॥
करवीरा[3] नागमाता[4] रोचनी[5] रसनेत्रिका[6] ।
नेपाली[7](4) कुनटी[8] गोला[9] मनोह्वा[10] नागजिह्विका[11] ॥१२६॥

---

(1) पुष्पकं पुष्पकेतु इति नामद्वयमपि पदच्छेदभेदात् साधु ज्ञो ॥
(2) मृदः आह्वयो यस्याः तेन मृत्तिका मृत्सा मृत्स्ना इत्यादि ॥
(3) शुल्वारिः । पामारिः कुष्ठारिः ॥
(4) नैप.ली .लि ·१ ॥

सिन्दूरं[1] नागजं[2] नागरक्तं[3] शृङ्गारभूषणम्[4] ।
चीनपिष्टं[1] हंसपाद[1]-कुरुविन्दे[2] तु हिङ्गुलः[3] ॥१२७॥
शिलाजतु[1] स्याद्रिजं[2] मर्त्यं[3] गैरेयं[4] मश्मजम्[5] ।
क्षारः[1] काचः[2] कुलाली[1] तु स्याच्चक्षुष्या[2] कुलत्थिका[3] ॥१२८॥
बोलो[1] गन्धरसः[2] प्राणः[3] पिण्डो[4] गोपरसः[5] शशः[6] ।
रत्नं[1] वसु[2] र्मणि[3](१) स्तत्र वैदूर्य्यं[1] बालवायजम्[2] ॥१२९॥
मरकतं[1] त्वश्मगर्भं[2] गारुत्मतं[3] हरिन्मणिः[4] ।
पद्मरागो[1] लोहितक[2]-लक्ष्मीपुष्पा[3]-रुणोपलाः[4] ॥१३०॥
नीलमणि[1] स्त्विन्द्रनीलः[2] सूचीमुखं[1] तु हीरकः[2] ।
वरारकं[3] रत्नमुख्यं[4] वज्रपर्य्यायनाम[5] च ॥१३१॥
विराटजो[1](२) राजपट्टो[2] राजावर्त्तो[3] ऽथ विद्रुमः[1] ।
रक्ताङ्गो[2] रक्तकन्द[3] स्य प्रवालं[4] हेमकन्दलः[5] ॥१३२॥
सूर्यकान्तः[1] सूर्यमणिः[2] सूर्य्याश्मा[3] दहनोपलः[4] ।
चन्द्रकान्त[1] श्चन्द्रमणि[2] श्चान्द्र[3] श्चन्द्रोपल[4] श्च सः ॥१३३॥
क्षीरतैलस्फटिकाख्या मन्यौ खस्फटिका[1] विमौ ।
शुक्तिजं[1] मौक्तिकं[2] मुक्ता[3] मुक्ताफलं[4] रसोद्भवम्[6](३) ॥१३४॥

इति पृथ्वीकायः ॥

---

(१) "वैदूर्य्यम्" इत्यपि । मणी इत्यपि ङ्यन्तः, मणिकः माणिक्यम् एतान्यत्र, अष्टविधा रत्नजातिः यद्वाचस्पतिः "हीरकं १ मौक्तिकं २ स्वर्णं ३ रजतं ४ चन्दनानि च ५ शङ्ख ६ श्चर्म्म च ७ रत्नं ८ चेत्यष्टौ स्यू रत्नजातयः" ॥

(२) विराटदेशोद्भवरत्नस्य विराटज हीरकस्य वा ॥

(३) हस्तिमस्तकाद्युद्भवमपि मौक्तिकमुच्यते यदाह "हस्तिमस्तकै

## अथाप्कायः।

नीरं[१] वारि[२] जलं[३] दकं[४] क[५]मुदकं[६] पानीय[७]मम्भः[८] कुशं[९] तोयं[१०]
जीवनं[११]-जीवनीय[१२]-सलिला[१३]-र्णांस्य[१४]म्बु[१५] वाः[१६] शम्बरम्[१७]।
[(१)]क्षीरं[१८] पुष्कर[१९]-मेघपुष्प[२०]-कमला[२१]न्यापः[२२] [(२)] पयः[२३]-
पाथसी[२४], कीलालं[२५] भुवनं[२६] वनं[२७] घनरसो[२८] यादोनिवासो[२९]
ऽमृतम्[३०] ॥ १२५ ॥

कुलीनसं[१] कबन्धं[२] च प्राणदं[३] सर्वतोमुखम्[४]।
अस्थाघा[१] ऽस्थाग[२]मस्ताघ[३] मगाधं[४] चा ऽतलस्पृशि[५] ॥१२६॥
निम्नं[१] गभीरं[२] गम्भीरं[३] मुत्तानं[१] तद्विलक्षणम्।
अच्छं[१] प्रसन्नं[२] ऽनच्छं[१] स्यादाविलं[२] कलुषं[३] च तत् ॥१२७॥
अवश्यायस्[१] तु तुहिनं[२] प्रालेयं[३] मिहिका[४] हिमम्[५]।
स्यान्नीहार[६]स्तुषार[७]श्च हिमानी[१] तु महद्धिमम् ॥१२८॥

[(३)]पारावारः[१] सागरो[२] ऽवारपारो[३]
ऽकूपारो[४]-दध्य[५]-र्णवा[६] वीचिमाली[७]।

---

दन्तौ तु दंष्ट्रासु च वराहयोः। मेघो भुजङ्गमो वेणुर्मत्स्यो मौक्तिकयोनयः" इति। मौक्तिकानां हि नानाविधत्रसस्थावरशरीरेषु उत्पत्तिसद्भावेऽपि पृथिवीकायत्वमेव, धर्म्मगिरः शुभगणयः करिदन्तेषु मौक्तिकानि विकलेन्द्रियेषु शुक्त्यादिषु मौक्तिकानि स्थावरेष्वपि वेणवादिषु तान्येवेति वचनात् न दुष्टं मौक्तिकानां पृथ्वीकायत्वम् ॥

(१) क्षीर धवलः स्फटिकः क्षीरस्फटिकः तैलकान्तिः स्फटिकः तैलस्फटिकः ताभ्यामन्यौ भिन्नवर्णौ इमौ सूर्य्यकान्त चन्द्रकान्तौ द्वावपि स्फटिकाख्याविन्त्यर्थः ॥

(२) आपः स्त्रीलिङ्गो बहुवचनान्तः ॥ (३) ऽपारावारोऽपि ॥

यादः[८]-स्रोतो[९]-वा-र्नदी[१०]-शः[११] (१) सरस्वान्

सिन्धु[१२]-रुदन्वान्[१४] मितद्रुः[१५] समुद्रः[१६] ॥१३८॥

आकरो[१८] मकर-रत्नाभ्यां जलान्निधि[१९]-धि[२०]-राशयः[२१] (२)।

द्वीपान्तरा असङ्ख्यास्ते सप्तैवेति तु लौकिकाः ॥१४०॥

लवण[१]-क्षीर[२]-दध्या[३]-ज्य[४]-सु[५]-रेक्षु[६]-स्वादु[७]-वारयः (३)।

तरङ्गो[१] भङ्ग[२]-वीच्यू[३]-र्म्युत्[४]-कलिका[५] महति त्विह ॥१४१॥

लहर्यु[१]ल्लोल[२]-कल्लोला[३] आवर्तः[१] पयसां भ्रमः।

तालूरो[२] ऽथ ककु[२]न्धा सौ वेला[१] स्यात् वृद्धि रम्भसः ॥१४२॥

(४) डिण्डीरो[१] ऽब्धिकफः[२] फेनो बुद्बुद[१]-स्थासकौ[२] समौ।

मर्यादा[१] कूलभूः कूलं[१] प्रपातः[२] कच्छ[३]-रोधसी[४] ॥१४३॥

---

(१) यादईशः १ स्रोतईशः २ वारीशः ३ नदीशः ४ ॥

(२) मकराकरः १ रत्नाकरः २ यौगिकत्वात् मकरालयः रत्नराशिः जलनिधिः १ जलधिः २ जलराशिः ३। यौगिकत्वात् वारिराशिः वारिधिः इत्यादयोऽप्युह्याः ॥

(३) लवणादयो वारि येषां ते तथा लवणवारि लवणोद समुद्रः १ क्षीरवारि क्षीरोदसमुद्रः २ दधिवारि दध्युदसमुद्रः ३ आज्यवारि घृतोदसमुद्रः ४ सुरावारिः सुरोदसमुद्रः ५ इक्षुवारिः इक्षूदसमुद्रः ६ स्वादुवारिः स्वादूदसमुद्रः ७। यदाहुः "लवणो १ रससमः २ सुरोदकः ३ सार्पिषो ४ दधिजलः ५ पयः पयाः ६ स्वादु ७ वारि रुदधिश्च सप्तमस्तान् परीत्यत इमे व्यवस्थिताः" इति ॥

(४) डीङ् विहायसागतौ आदिरात्मनेपदी डयते अजाघातेरिति डिण्डीरः गम्भीरगभीरेति सूत्रेण डीङोऽपि ईरोऽन्तत्वं पूर्वस्य नोन्तश्च उज्ज्वलदत्तस्तु डिण्ड गत्यर्थादरयोः बाहुलकादतोऽपि इरन् प्रत्यये डिण्डते इतस्ततो गच्छतीति डिण्डीरः इत्याह ॥

तटं[५] तीरं[६] प्रतीरं[७] च पुलिनं[१] तज्जलोज्झितम् ।
सैकतं[२] चान्तरीपं[१] तु द्वीप[२]मन्तर्जले तटम् ॥१४४॥
तत् परं पार[१]मवारं[१] त्ववाक् पात्रं[१] तदन्तरम् ।
नदी[१] हिरण्यवर्णा[२] स्याद्रोधोवक्रा[३] तरङ्गिणी[४] ॥१४५॥
सिन्धुः[५] शैवलिनी[६] वहा[७] च ह्लादिनी[८] स्रोतस्विनी[९] निम्नगा[१०] ।
स्रोतो[११](१) निर्झरिणी[१२] सरि[१३]च्च तटिनी[१४] कूलङ्कषा[१५] वाहिनी[१६] ।
कर्षू[१७] द्वीपवती[१८] समुद्रदयिता[१९]-धुन्यौ[२०] स्रवन्ती[२१]-सरस्वत्यौ[२२] पर्वतजा[२३]ऽपगा[२४] जलधिगा[२५] कुल्या[२६] वजम्बालिनी[२७] ॥१४६॥
गङ्गा[१] त्रिपथगा[२] भागीरथी[३] त्रिदशदीर्घिका[४] ।
त्रिस्रोता[५] जाह्नवी[६] मन्दाकिनी[७] भीष्म[८]-कुमारसूः[९](२) ॥१४७॥
सरिद्वरा[१०] विष्णुपदी[११] सिद्ध[१२] स्वः[१३]-स्वर्गि[१४]-खापगा[१५](३) ।
ऋषिकुल्या[१६] हैमवती[१७] स्वर्वापी[१८] हरशेखरा[१९] ॥१४८॥
यमुना[१] यमभगिनी[२] कालिन्दी[३] सूर्यजा[४] यमी[५] ।
रेवे[१]न्दुजा[२] पूर्वगङ्गा[३] नर्मदा[४] मेखलाद्रिजा[५] ॥१४९॥
गोदा[१] गोदावरी[२] तापी[१] तपनी[२] तपनात्मजा[३] ।
शुतुद्रि[१]स्तु शतद्रुः[२] स्यात् कावेरी[१] त्वर्द्धजाह्नवी[२] ॥१५०॥
करतोया[१] सदानीरा[२] चन्द्रभागा[१] तु चन्द्रिका[२] ।

---

(१) स्रो, स्रोतसी स्रोतांसि ॥
(२) अमूदन्तरूपाणि भीष्मसूः १ कुमारसूः २ ॥
(३) सिद्धापगा १ स्वरापगा २ स्वर्गापगा ३ खापगा ४ ॥

वाशिष्ठी[1] गोमती[2] तुल्ये ब्रह्मपुत्री[1] सरस्वती[2] ॥१५१॥
[(1)]विपाट्[1] विपाशा[2] ऽर्जुनी[1] तु बाहुदा[2] सैतवाहिनी[3] ।
वैतरणी नरकस्था[2] स्रोतो[1]ऽम्भःसरणं स्वतः ॥१५२॥
प्रवाहः[1] पुनरोघः[2] स्याद् वेणी[3] धारा[4] रयश्[5] च सः ।
घट्ट[1]स्तीर्थे[2]ऽवतारे[3]ऽम्बुवृद्धौ पूरः[1] प्लवो[2]ऽपि च ॥१५३॥
पुटभेदा[1]स्तु वक्राणि[2][(2)] भ्रमा[1]स्तु जलनिर्गमाः ।
परीवाहा[1] जलोच्छ्वासाः[2] कूपका[1]स्तु विदारकाः[2] ॥१५४॥
प्रणाली[1][(3)] जलमार्गे ऽथ पामं[1] कुल्या[2] च सारणिः[3] ।
सिकता[1][(4)] वालुका[2] विन्दौ[1] पृषत्[2]-पृषत[3]-विप्रुषः[4][(5)] ॥१५५॥
जम्बाल[1]-चिकिलौ[2] पङ्कः[3] कर्दमश्[4] च निषद्वरः[5] ।
शादो[6] हिरण्यबाहु[1]स्तु शोणो[2] नदे[1] पुनर्वहः[2] ॥१५६॥
भिद्य[3] उद्ध्यः[4] सरस्वांश्[5] च द्रहो[1] ऽगाधजलो[2] ह्रदः[3] ।
कूपः[1] स्यादुदपानो[2] ऽन्धुः[3] प्रहि[4]र्नेमी[1] तु तत् त्रिका[2][(6)] ॥१५७॥

---

(१) विपाशौ विपाशः स्त्री ।

(२) "वक्रः कुटिले क्रूरे पुटभेदे शनैश्चरे" इति महेश्वरः । चक्राणीत्यपि यन्महेश्वरः "चक्रो गणे चक्रवाके चक्रं सैन्यरथाङ्गयोः । ग्रामजाले कुलालस्य भाण्डे राष्ट्रास्त्रयोरपि । अम्भसामपि चावर्त्ते" इति ।

(३) त्रिषु ।

(४) बहुवचनान्तः, "वालिका वालुका बाला [illegible] वर्णभूषणे" इति महेश्वरः ।

(५) "पृषन्ति विन्दुपृषताः पुमांसो विप्रुषः स्त्रियः" इत्यमरः । पृषती पृषन्तौ क्लौ, विप्रुट् विप्रुषौ स्त्री ।

(६) कूपमुखबन्धनस्य ।

नान्दीमुखो[१] नान्दीपटो[२] वीनाहो[१] मुखबन्धने ।
आहावस्तु[१] निपानं[२][(१)] स्यादुपकूपेऽथ दीर्घिका[१] ॥१५८॥
वापी[२] स्यात् क्षुद्रकूपे तु चुरी[१] चुण्डी[२] च चूतकः[३][(२)] ।
उद्घाटकं[१] घटीयन्त्रं[२][(३)] पादावर्तो[१]ऽरघट्टकः[२] ॥१५९॥
अखातं[१] तु देवखातं[२] पुष्करिण्यां[१] तु खातकम्[२] ।
पद्माकर[१]स्तडागः[२] स्यात्[(४)] कासारः[३] सरसी[४] सरः[५] ॥१६०॥
वेशन्तः[१] पल्वलो[२]ऽल्पं तत् परिखा[१] खेय[२]-खातिके[३] ।
स्यादालवाल[१]मावाल[२][(५)]मावापः[३] स्थानकं[४] च सः ॥१६१॥
आधारस्त्वम्भसां बन्धो[१] निर्झरस्तु[१] झरः[२] सरिः[३] ।
उत्सः[४] स्रवः[५] प्रस्रवणं[६] जलधारा[१] जलाशयाः[२] ॥१६२॥

इत्यप्कायः ।

## अथ तेजस्कायः ।

वह्नि[१]र्बृहद्भानु[२]र्हिरण्यरेतसौ[३]
धनञ्जयो[४] हव्य[५]-हवि[६]-र्हुताशनः[७][(६)] ।

---

(१) पश्वादीनां पानार्थं शिलादिभिः कूपसमीपे निर्मितम् ॥

(२) "चूतकां नीरसं पीत्वा पान्था पथिमुखं ययुः" इति माघः ॥

(३) येन कूपादे र्जलमूर्द्ध्वं वाह्यते तद्यन्त्रस्य ॥

(४) तटाक इत्यन्ये ॥

(५) आवालं स्वमते कोषनिघण्टुः, व्याडिस्तु "आवालो जल-परिक्षेप" इति पुंस्याह ॥

(६) हव्याशनः १ हविरशनः २ हुताशनः ३ ॥

(1)कृपीटयोनि[8]र्दमुना[9](2) विरोचना[10]-

-शुशुक्षणी[11] छागरथ[12]स्तनूनपात्[13](3) ॥१६३॥

कृशानु[14]-वैश्वानर[15]-र्वीतिहोत्रा[16]

हुताशनः[17] पावकः[18]-चित्रभानु[19] ।

(4)अप्पित्त[20]-धूमध्वज[21]-कृष्णवर्त्मा[22]-

ऽर्चिष्मा[23](5) शमीगर्भ[24]-तमोघ्न[25]-शुक्राः[26] ॥१६४॥

शोचिष्केशः[27] शुचि[28]-हुतवहो[29]-षर्बुधाः[30]-सप्त[31]-मन्त्र[32]-ज्वाला-जिह्वाः[33](6) ज्वलन[34]-शिखिनौ[35] जागृवि[36] जातवेदाः[37](7) ।

बर्हिःशुष्मा[38](8) ऽनिलसख[39]-वसू[40] रोहिताश्वा[41]-श्रयाशौ[42]

(9)बर्हिर्ज्योति[43] र्दहन[44]-बहुलौ[45] हव्यवाहो[46] ऽनलो[47] ऽग्निः[48] ॥१६५॥

---

(१) कृपीटं जलं योनिरस्य यत् स्मृतिः, अद्भ्योऽग्निर्ब्रह्मणः क्षत्रमिति ॥

(२) दमुनाः दमुनसौ दमुनसः दमूनाः इति । दीर्घोऽप्युकारः ॥

(३) तनूनपातौ तनूनपातः ॥

(४) अप्पित्तवर्जा एते सर्वे पुंसि वह्निपर्यायाः ॥

(५) कृष्णवर्त्मानौ कृष्णवर्त्मानः, अर्चिष्मान् अर्चिष्मन्तौ अर्चिष्मन्तः, अत्र नस्तं पदमध्य इति पदप्रतिषेधात् नाम्यन्तस्थेति षकारस्य षत्वम् ॥ (६) सप्तजिह्वः १ मन्त्रजिह्वः २ ज्वालाजिह्वः ३ ॥

(७) शिखी शिखिनौ शिखिनः, जागृविः हरिवत् जातवेदस् सान्तः ॥ (८) बर्हिःशुष्माणौ बर्हिःशुष्माणः ॥

(९) बर्हिर्ज्योतिषौ बर्हिर्ज्योतिषः, बर्हिषौ बर्हिषः, बर्हिरिति इसन्तनामापि ॥

विभावसुः[९] सप्तो-दर्चिः[१०(१)] स्वाहा[१]ऽग्नायी[२]प्रियाऽस्य च ।
और्वः[१] संवर्तको[२]ऽब्ध्यग्नि[३] र्वाडवो[४] वडवामुखः[५] ॥१६६॥
दवो[१] दावो[२] वनवह्नि[३] र्मेघवह्नि[१] रिरम्मदः[२] ।
क्षामणा[१]स्तु करीषाग्निः[२] कुकूल[१]स्तु तुषानलः[२] ॥१६७॥
सन्तापः[१] सञ्ज्वरो[२] बाष्प[१] ऊष्मा[२] जिह्वाः स्यु रर्चिषः[१(२)] ।
हेतिः[१] कीला[२] शिखा[३] ज्वाला[४]ऽर्चि[५] र्झलका[१] मञ्चत्यसौ ॥१६८॥
स्फुलिङ्गो[१]ऽग्निकणो ऽलातज्वालोल्का[१]ऽलात[१]मुल्मुकम्[२] ।
धूमः[१] स्याद्वायुवाहो[२]ऽग्निवाहो[३] दहनकेतनम्[४] ॥१६९॥
अम्भःसूः[५] करमाल[६]श्च सरी[७] जीमूतवाह्य[८]पि[(३)] ।
तडि[१]दैरावती[२] विद्यु[३]च्चला[४] शम्पा[५]ऽचिरप्रभा[६] ॥१७०॥
आकालिकी[७] शतह्रदा[८] चञ्चला[९] चपला[१०]ऽशनिः[११] ।
सौदामिनी[१२] क्षणिका[१३]च ह्रादिनी[१४] जलवालिका[१५] ॥१७१॥

इति तेजस्कायः ।

## अथ वायुकायः ।

वायुः[१] समीर-समिरौ[३] पवना[४]-शुगौ[५] नभः-
स्वातो[६] नभस्व[७(४)]-दनिल[८]-श्वसनाः[९] समीरणः[१०] ।

---

(१) सप्तार्चिषौ सप्तार्चिषः, ऊर्द्धार्चिषौ ऊर्द्धार्चिषः, स्वाहा गङ्गावत् अव्ययमपि ॥

(२) ऊष्माणौ ऊष्माणः, स्त्री क्लो, स्त्रियां अर्चिः अर्चिषौ अर्चिषः, क्लीबे अर्चिः अर्चिषी अर्चींषि । अर्चिः इति तृतीयस्वरान्तोऽपि ॥

(३) जीमूतवाहिनौ जीमूतवाहिनः ॥

(४) नभस्वान् नभस्वन्तौ ॥

वातो[11]ऽहिकान्त[12]-[illegible]मान[13]-मरु[14]-त्प्रकम्पनाः[15]
कम्पाक[16]-नित्यगति[17]-गन्धवह[18]-प्रभञ्जनाः[19] ॥१७२॥
मातरिश्वा[20] जगत्प्राणः[21] पृषदश्वो[22] महाबलः[23]।
मारुतः[24] स्पर्शनो[25] दैत्यदेवो[26], झञ्झा[1]-स-वृष्टियुक् ॥१७३॥
प्राणो[1] नासाग्रहृन्नाभिपादाङ्गुष्ठान्तगोचरः।
अपानः[1] पवनो मन्या(1) पृष्ठपृष्ठान्तपार्ष्णिगः ॥१७४॥
समानः[1] सन्धिहृन्नाभिषु, उदानो[1] हृच्छिरोऽन्तरे।
सर्वत्वग्वृत्तिको व्यान[1] इत्यङ्गे पञ्च वायवः ॥१७५॥

इति वायुकायः।



अरण्य[1] मटवी[2] सत्रं[3] वार्क्षं[4] च गहनं[5] झषः[6]।
कान्तारं[7] विपिनं[8] कक्षः[9] स्यात् प्रषण्डं[10] काननं[11] वनम्[12] ॥१७६॥
दवो[13] दावः[14], प्रस्तार[1] स्तु तृणाटव्यां[2] झषो[3]ऽपि च।
अपी-पार्श्वां वनं[2](2) शेल[3]मारामः[4] कृतिमे वने ॥१७७॥
निष्कुट[1] स्तु गृहारामो, बाह्याराम स्तु पौरकः[2]।
आक्रीडः[1] पुन उद्यानं[2] राज्ञां त्वन्तःपुरोचितम् ॥१७८॥
तदेव प्रमदवनं[1] अमात्यादे स्तु निष्कुटे।
वाटी[1](3) पुष्पा वृक्षा चासौ(4) क्षुद्रारामः प्रसीदिका[1] ॥१७९॥

(१) मन्या ग्रीवापश्चाद्भागः ॥
(२) अपवनम् १ उपवनम् २ ॥
(३) वाटस्तु वर्त्मनि वृतौ वाटी स्याद्गृहनिष्कुटे इति श्रीधरः ॥
(४) पुष्पवाटी १ वृक्षवाटी २ वाटी शब्द इत्यर्थः ॥

वृक्षो[1]ऽग[2]शिखरी[3]च शाखि[4]-फलद्रा[5]वद्रि[6]हरिद्रु[7]द्रुमो[8]
जीर्णो[9] द्रु[10] विटपी[11] कुठः[12](1) क्षितिरुहः[13]कारस्करो[14]
विष्टरः[15]।
गन्धावर्त्ती[16]-करालिको[17] तरु[18]-वसू[19] पर्णी[20] पुलाकी[21]
ह्रिपः[22]साला[23]-नोकह[24]-गच्छ[25]-पादप[26]-नगा[27]-द्रुमा[28]-
गमौ[29] पुष्पदः[30] ॥१८०॥

कुञ्ज[1]-निकुञ्ज[2]-कुडङ्गाः[3] स्थाने वृक्षै र्लतान्तरे।
पुष्पैस्तु फलवान् वृक्षो वानस्पत्यो[1] विना तु तैः ॥१८१॥
फलवान् वनस्पतिः[1] स्यात् फलावन्ध्यः फलेग्रहिः[1]।
फलवन्ध्य स्त्ववकेशी[1]फलवान्[1] फलिनः[2] फली[3] ॥१८२॥
ओषधिः[1] स्या दोषधि[2] श्च फलपाकावसानिका।
क्षुपो[1] ह्रस्वशिफाशाखः प्रतति[1] र्व्वतति[2] र्लता[3] ॥१८३॥
वल्ली[4] स्यां तु प्रतानिन्यां[1] गुल्मिन्यु[2]-लप[3]-वीरुधः[4]।
स्यात्प्ररोहो[1]ऽङ्कुरो[2]ऽङ्कूरो[3]रोह[4]श्च स तु पर्व्वणः ॥१८४॥
समुत्थितः स्याद् वल्लिशं[1] शिखा[1]-शाखा[2]-लताः[3] समाः।
साला[1]शाला[2]स्कन्धशाखा[3]स्कन्धः[1]प्रकाण्डमस्तकम् ॥१८५॥
मूलाच्छाखावधि र्गण्डः प्रकाण्डो[1]ऽथ जटा[1] शिफा[2]।
प्रकाण्डरहिते स्तम्बो[1]विटपो[2]गुल्म[3] इत्यपि ॥१८६॥
शिरोनामा[1](2) ऽग्रं[2] शिखरं[3] मूलं[1] बुध्नो[2] ऽङ्घ्रिनामक[3] च।

---

(1) कुठिः सौत्रः कोठति कुठः। कुठान् वृक्षान् इयर्त्ति कुठारः।
जीर्णो इत्यत्र जिर्णः जलः इति पाठान्तरः॥ [पर्य्याया अस्य॥

(2) शिरसो नामानि पर्य्यायाः अस्य अंशेषु चरणस्य नामानि

सारो[१] मज्जा[२](१) त्वचि [illegible]क्षी[१] चोचं[२] वल्कं[४] च वल्कलम्[५] ॥१८७॥
स्थाणौ[१] तु ध्रुवकः[२] शङ्कुः[३] काष्ठे[१] दलिकं[२] दारुणी[३]।
निष्कुहः[१] कोटरो[२] मञ्जा[१] मञ्जरिर्[२] वल्लरिर्[३] च सा ॥१८८॥
पत्रं[१](२) पलाशं[२] छदनं बर्हं[३] पर्णं[४] छदं[६] दलम्[७]।
नवे तस्मिन् किसलयं[१] किसलं[२] पल्लवो[३]ऽत्र तु(३) ॥१८९॥
नवे प्रवालो[१]ऽस्य कोशी[१] शुङ्गा[२](४) माढिर्[१] दलस्नसा।
विस्तार[१]-विटपौ[२] तुल्यौ प्रसूनं[१] कुसुमं[२] सुमम्[३] ॥१९०॥
पुष्पं[४] सूनं[५] सुमनसः[६](५) प्रसवं[७] च मणीवकम्[८]।
जालक[१]-क्षारकौ[२] तुल्यौ कलिकायां[१] तु कोरकः[२] ॥१९१॥
कुट्मलो[१] मुकुलं[२] गुच्छो[१] गुच्छ[२]-स्तबक[३]-गुत्सकाः[४]।
गुलुञ्छो[५]ऽथ रजः पौष्पं परागो[१]ऽथ रसो मधु[२](६) ॥१९२॥
मकरन्दो[२] मरन्दश्[३] च वृन्तं[१] प्रसवबन्धनम्।

---

(१) मज्जा मज्जानौ मज्जानः, त्वक् त्वग् त्वचौ त्वचः, अदन्तो-ऽपि त्वचा स्त्रियाम् अदन्तोऽपि त्वचः पुंसि इति हलायुधटीका ॥

(२) प्रज्ञाद्यणि पात्रमपि यन्महेश्वरः "पात्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते" इति अयं द्वितकार-एकतकारस्य धातुप्रत्यय-भेदात् ॥

(३) कन्दलमपि त्रिलिङ्गोऽयं "कन्दलं तु कपाले स्यादुपरागे नवाङ्कुरे" इति कोषान्तरम् ॥

(४) शुङ्गा आवन्तः-पुंस्त्रीलिङ्गोऽयं यद्वाग्भटः, वटप्ररोहैः शुङ्गै-ति ॥

(५) बहुवचनान्तः स्त्री ॥

(६) मधु क्लीबे, पुंस्यपीति हलायुधटीका। मकरन्दोऽपि ॥

करवीरो[1] हयमारः[2] कुटजो[1] गिरिमल्लिका[2] ।
विदुलो[1] वेतसः[2] शीतो[3] वानीरो[4] वञ्जुलो[5] रथः[6] ॥२०३॥
(1) कर्कन्धुः[1] कुवली[2] कोली[3] बदर्य[4]थ हलिप्रियः[1] ।
नीपः[2] कदम्बः[3] सालस्तु[1] सर्जो[2] ऽरिष्टस्तु[1] फेनिलः[2] ॥२०४॥
निम्बो[1] ऽरिष्टः[2] पिचुमन्दः[3] समौ पिचुल[1]-झाबुकौ[2] ।
कार्पास[1]स्तु बादरः[2] स्यात् पिचव्य[3] स्तूलकं[1] पिचुः[2] ॥२०५॥
आरग्वधः[1] कृतमाले[2] वृषो[1] वासा[2] ऽटरूषके[3] ।
करञ्ज[1]स्तु नक्तमालः[2] चुहि[1] वीज्वो[2] भल्लातकः[3] ॥२०६॥
महाकाल[1]स्तु किम्पाके[2] मन्दारः[1] पारिभद्रके[2] ।
मधूक[1]स्तु मधुष्ठीलो[2] गुडपुष्पो[3] मधुद्रुमः[4] ॥२०७॥
पीलुः[1] सिमो[2] गुडफलो[3] गुग्गुलु[1]स्तु पलङ्कषः[2] ।
राजादनः[1] पियालः[2] स्यात् तिनिश[1]स्तु रथद्रुमः[2] ॥२०८॥
नागरङ्ग[1]स्तु नारङ्ग[2] इङ्गुदी[1] तापसद्रुमः[2] ।
काश्मरी[1] भद्रपर्णी[2] श्रीपर्ण्य[3]म्लिका[1]तु तिन्तिड़ी[2] ॥२०९॥
शेलुः[1] श्लेष्मातकः[2] पीतसाल[1]स्तु प्रियको[2] ऽसनः[3] ।
पाटलिः[1] पाटला[2] भूर्जो[1] बहुत्वक्को[2] मृदुच्छदः[3] ॥२१०॥
द्रुमोत्पलः[1] कर्णिकारः[2] निचुले[1] हिज्जला[2]म्बुजौ[3] ।
धात्री[1] शिवा[2]चामलकी[3] कलि[1]रक्षो[2] बिभीतकः[3] ॥२११॥
हरीतक्य[1]भया[2] पथ्या[3] त्रिफला[1] तत् फलत्रयम्[2] ।
तापिञ्छ[1]स्तु तमालः[2] स्यात् चम्पको[1] हेमपुष्पकः[2] ॥२१२॥

---

(1) पुं स्त्री, स्त्रियां कर्कन्धूः कर्कन्ध्वौ कर्कन्ध्वः ॥

निर्गुण्डी[1] सिन्दुवारे[2] ऽतिमुक्तके[1] माधवी[2] लता[3] ।
वासन्ती[4] चोड्रपुष्प[1] तु जपा[2] जाति[1]स्तु मालती[2] ॥२१३॥
मल्लिका[1] स्याद्विचकिलः[2] सप्तला[1] नवमालिका[2] ।
मागधी यूथिका[2] सा तु पीता स्याद् हेमपुष्पिका[1] ॥२१४॥
प्रियङ्गुः[1] फलिनी[2] श्यामा[3] बन्धूको[1] बन्धुजीवकः[2] ।
करुणो[1] मल्लिकापुष्पो[2] जम्बीरो[1] जम्भ[2]-जम्भलौ[3] ॥२१५॥
मातुलुङ्गो[1] बीजपूरः[2] करीर[1]-क्रकरौ[2] समौ ।
पञ्चाङ्गुलः[1] स्यादेरण्डे[2] धातक्यां[1] धातुपुष्पिका ॥२१६॥
कपिकच्छु[1]रात्मगुप्ता[2] धत्तूरः[1] कनकाह्वयः[2] ।
कपित्थ[1]स्तु दधिफलो[2] नालिकेर[1]स्तु लाङ्गली[2] ॥२१७॥
आम्रातको[1] वर्षपाकी[2](1) केतकः[1] क्रकचच्छदः[2] ।
कोविदारो[1] युगपत्रः[2] सल्लकी[1] तु गजप्रिया[2] ॥२१८॥
वंशो[1] वेणु[2]र्यवफल[3]स्त्वक्सार[4]स्तृणध्वजः[5] ।
मस्करः[6] शतपर्वा[7] च स्वनन् वात स कीचकः[1] ॥२१९॥
तुगाक्षीरी[1] वंशक्षीरी[2] त्वक्क्षीरी[3] वंशरोचना[4] ।
पूगे[1]क्रमुक[2]गूवाकौ[3]स्तस्यो द्वेगं[1] पुनः फलम् ॥२२०॥
ताम्बूलवल्ली[1] ताम्बूली[2] नागपर्य्यायवल्ल्य[2]पि(2) ।
तुम्ब्य[1]लाबुः[2](3) कृष्णला[1] तु गुञ्जा[2] द्राक्षा[1] तु गोस्तनी ॥२२१॥
मृद्वीका[2] हारहूरा[3] च गोक्षुर[1]स्तु त्रिकण्टकः[2] ।

(1) वर्षपाकिणो वर्षपाकिणः ॥

(2) नागवल्ली फणिलता इत्यादि ॥

(3) स्त्री क्ली, द्वावपि ॥

श्वदंष्ट्रा[3] स्थलशृङ्गाटो[4] गिरिकर्ण्य[1]ऽपराजिता[2] ॥२२२॥
व्याघ्री[1] निदिग्धिका[2] कण्टकारिका[3] स्याद् द्वयाऽमृता[1] ।
वत्सादनी[2] गुडूची[3] च विशाला[1] त्विन्द्रवारुणी[2] ॥२२३॥
उशीरं वीरणीमूले ह्रीवेरे[1] वालकं[2] जलम्[3] ।
प्रपुन्नाट[1]स्त्वेडगजो[2] दद्रुघ्न[3] श्चक्रमर्दकः[4] ॥२२४॥
लङ्कायां[1] महारजनं[2] कुसुम्भं[3] कमलोत्तरम्[4] ।
लोध्रो[1] तुगालवो[2] रोध्र[3]-तिल्व[4]-शावर[5]-मार्जनाः[6] ॥२२५॥
मृणालिनी[1] पुटकिनी[2] नलिनी[3] पङ्कजिन्य[4]पि ।
कमलं[1] नलिनं[2] पद्मं[3] अरविन्दं[4] कुशेशयम्[5] ॥२२६॥
परं शतसहस्राभ्यां पत्रं[7(1)] राजीव[8]-पुष्करे[9] ।
विसप्रसूतं[10(2)] नालीकं[11] तामरसं[12] महोत्पलम्[13] ॥२२७॥
तज्जलात् सरसः पङ्कात् परै रुट्-रुह-जन्म-जैः[14(3)] ।
पुण्डरीकं[1] सिताम्भोजं अथ रक्त सरोरुहे[1] ॥२२८॥
रक्तोत्पलं[2] कोकनदं[3] कैरविण्यां[1(4)] कुमुद्वती[2(5)] ।
उत्पलं[1] स्यात् कुवलयं[2] कुवेलं[3] कुवलं[4] कुवम्[5] ॥२२९॥

---

(१) शतपत्रं १ सहस्रपत्रम् २ ॥

(२) विसात्प्रसूतं विसप्रसूतं विसप्रसूनं विसनिसूनमपि इ टीका ॥

(३) जलरुहौ जलरुहि, जलजन्मनि जलजन्मानि, सरोरु सरोजन्मनी पङ्करुही, जलरुट् १ जलरुहं २ जलजन्म ३ जलजं सरोरुट् ५ सरोरुहं ६ सरजन्म ७ सरोजं ८ पङ्करुट् ९ पङ्करुहं पङ्कजन्म ११ पङ्कजं १२ ॥

(४) चन्द्रविकाशिन्याः ॥

(५) चन्द्रविकाशी कमलः ॥

सिते तु तत्र कुमुदं[1] कैरवं गर्दभाह्वयम्[3] ।
नीले तु स्यादिन्दीवरं[1] हल्लकं[1] रक्तसन्ध्यके[2] ॥२३०॥
सौगन्धिकं[1] तु कह्लारं[2](1) बीजकोशो[1] वराटकः[2] ।
कर्णिका[2] पद्मनालं[1] तु मृणालं[2] तन्तुलं[3] बिसम्[4] ॥२३१॥
किञ्जल्कं[1] केसरं[2] संवर्त्तिका[1] तु स्यान्नवं दलम् ।
करहाटः[1] शिफा[2] च स्यात् कन्दे सलिलजन्मनाम्(2) ॥२३२॥
उत्पलानां तु शालूकं[1](3) नील्यां[1] शैवालं[2] शैवले[3] ।
शेवालं[4] शैवलं[5] शैपालं[6] जलाच्छूक[7]-नीलिके[8](4) ॥२३३॥
धान्यं[1](5) तु सस्यं[2] सीत्यं[3] च व्रीहि[4] स्तम्बकरि[5]श्च तत् ।
आशुः[1] स्यात् पाटलो[2] व्रीहि[3]र्गर्भपाकी[1](6) तु षष्टिकः[2] ॥२३४॥
शालयः[1] कलमाद्याः स्युः कलमः[1] स्तु कलामकः[2] ।
लोहितो रक्तशालिः[1] स्या न्महाशालिः[1] सुगन्धिकः[2] ॥२३५॥

---

(1) कैरविण्यादि कह्लारान्तं चन्द्रविकासिनि ॥

(2) कन्दं मूले वत् हैमानेकार्थः "कन्दोऽब्दे सूरणे स्तम्बमूले" इति ॥

(3) उत्पलानां चन्द्रविकासिनाम् । धन्वन्तरिस्तु पद्ममूलं तु शालूकमित्याह ॥

(4) जलसूकं १ जलनीलिका २ ॥

(5) व्रीहि १ यवो २ मसूरो ३ गोधूमो ४ मुद्ग ५ माष ६ तिल ७ चणकाः ८ अणवः ९ प्रियङ्गु १० कोद्रव ११ मयुष्टकाः १२ शालि १३ आढक्यः १४ । त्रिपुट कलाय १५ कुलत्थौ १६ शणगाश्च १७ सप्तदशानि धान्यानि ॥

(६) नान्तः कवर्गैकस्वरवदिति णत्वे गर्भपाकिणौ गर्भपाकिणः ॥

यवो[1] हयप्रिय[2]स्तीक्ष्णशूक[3]स्तोक्म[1]स्तु स हरित् ।
मङ्गल्यको[1] मसूरः[2] स्यात् कलाय[1]स्तु सतीनकः[2] ॥२३६॥
हरेणुः[3] खण्डिक[4]श्चाथ चणको[1] हरिमन्थकः[2] ।
माष[1]स्तु मदनो[2] नन्दी[3] वृष्यो[4] बीजवरो[5] बली[6] ॥२३७॥
मुद्ग[1]स्तु प्रथनो[2] लोभ्यो[3] वलाटो[4] हरितो[5] हरिः[6] ।
पीतेऽस्मिन् वसु[1]-खण्डी[2]-प्रवेल[3]-जय[4]-शारदाः[5] ॥२३८॥
कृष्णे प्रवर[1]-वासन्त[2]-हरिमन्थज[3]-शिम्बिकाः[4] ।
वनमुद्गे तु वरक[1]-निगूढक[2]-कुलीनकाः[3] ॥२३९॥
खण्डीरा[4](१)श्च राजमुद्गे[1] तु मकुष्टक[2]-मयुष्टकौ[3] ।
गोधूमः[1] सुमनो[2] वह्नि[1](२) र्निष्पावः[2] सितशिम्बिकः[3] ॥२४०॥
कुलत्थ[1]स्तु कालवृन्त[2]स्ताम्रवृन्ता[1] कुलत्थिका[2] ।
आढकी[1] तुवरी[2] वर्णा[3] स्यात् कुल्माष[1]स्तु यावकः[2] ॥२४१॥
नीवार[1]स्तु वनव्रीहिः श्यामाक[1]-श्यामकौ[2] समौ ।
कङ्गु[1]स्तु कङ्गुनी कङ्गुः[3] प्रियङ्गुः[4] पीततण्डुला[5] ॥२४२॥
सा कृष्णा मधुका[1] रक्ता शोधिका[1] मुसटी[1] सिता ।
पीता माधव्य[1]थोद्दालः[1] कोद्रवः[2] कोरदूषकः[3] ॥२४३॥
चीनक[1]स्तु काककङ्गु[2]र्यवनाल[1]स्तु(३) योनलः[2] ।
जूर्णाह्वयो[3] देवधान्यं[4] जोन्नाला[5] बीजपुष्पिका[6] ॥२४४॥

---

(१) खण्डिनो खण्डिनः ॥

(२) सुमनः अनुपदत्वात् देववत् ॥

(३) वर्वटी गणिकायां स्यात् व्रीहिभेदेऽपि वर्वटी इति चोधरः, अथामरो वर्वन्ति वर्वटी, राजमाषस्तु वर्वटः इति त्रिकाण्डशेषः ॥

शणं[१] भङ्गा[२] मातुलानी[३] स्यात् उमा[१] तु क्षुमा[२] ऽतसी[३] ।
गवेधुका[१] गवेधुः[२](१) स्यात् जर्तिलो[१][२]ऽरण्यजस्तिलः ॥२४५॥
षण्ढतिलो[१] तिलपिञ्ज[२]स्तिलपेजो[३] ऽथ सर्षपः[१] ।
कदम्बक[२]स्तन्तुभो[३]ऽथ सिद्धार्थः[१] श्वेतसर्षपः[२] ॥२४६॥
माषादयः शमीधान्यं[१] शूकधान्यं[१] यवादयः ।
स्यात् सस्यशूकं[१] किंशारुः[२] कणिशं[१] सस्यशीर्षकम्[२] ॥२४७॥
स्तम्ब[१] गुच्छो[२] धान्यादे र्नालं[१] काण्डो[२] ऽफलस्तु सः ।
पलः[१] पलालो[२] धान्यत्वक् तुषो[१] बुसं[१] कडङ्गरः[२] ॥२४८॥
धान्यं[१] मावसितं[१] रिद्धं[१] तत् पूतं निर्बुसीकृतम् ।
मूल[१]-पत्र[२]-करीरा[३]-ग्र[४]-फल[५]-काण्डा[६]-धिरूढकाः[७] ॥२४९॥
त्वक्[८]-पुष्प[९]-कवकं[१०] शाकं[१] दशधा शिग्रुकं[२] च तत् ।
तण्डुलीय[१]स्तण्डुलेरो[२] मेघनादो[३] ऽल्पमारिषः[४] ॥२५०॥
बिम्बी[१] रक्तफला[२] पीलुपर्णी[३] स्यात् तुण्डिकेरिका[४] ।
जीवन्ती[१] जीवनी[२] जीवा[३] जीवनीया[४] मधुस्रवा[५] ॥२५१॥
वास्तुकं[१] तु क्षारपत्रं[२] पालक्या[१](३) मधुसूदनी[२] ।
रसोनो[१] लशुनो[२] ऽरिष्टो[३] म्लेच्छकन्दो[४] महौषधम्[५] ॥२५२॥
महाकन्दो[६] रसोनो ऽन्यो गृञ्जनो[१] दीर्घपत्रकः[२] ।
भृङ्गराजो[१] भृङ्गरजो[२] मार्कवः[३] केशरञ्जनः[४] ॥२५३॥

---

(१) मडुवा वरटी इति भाषा ।

(२) इत्यानुक्तान्यपि तिलनामानि लोपि यथा तिलः । पूत २ स्नेहफलः २ इति मदनपालः ॥

(३) पालङ्क्याम् इति वा ॥

काकमाची[1] वायसी[2] स्यात् कारवेल्लः[1] कटिल्लकः[2] ।
कूष्माण्डकस्तु[1] कर्कारुः[2] कोशातकी[1][(2)] पटोलिका[2] ॥२५४॥
चिर्भिटी[1] कर्कटी[2][(3)] वालुङ्क्ये[3]र्वारु[4]स्त्रपुसी[5] च सा ।
अर्शोघ्नः[1] शूरणः[2] कन्दः[3] शृङ्गवेरक[1]मार्द्रकम्[2] ॥२५५॥
कर्कोटकः[1] किलासघ्न[2]स्तिक्तपत्रः[3] सुगन्धकः[4] ।
मूलकं[1] तु हरिपर्णं[2] सेकिमं[3] हस्तिदन्तकम्[4] ॥२५६॥
तृणं[1] नडादि निवारादि च शस्य तु तन्नवम् ।
सौगन्धिकं[1] देवजग्धं[2] पौरं[3] कत्तृण[4]-रोहिषे[5] ॥२५७॥
दर्भः[1] कुशः[2] कुथो[3] बर्हिः[4][(4)] पवित्र[5]मथ तेजनः[1] ।
गुन्द्रो[2] मुञ्जः[3] शरो[4] दूर्वा[1] त्वनन्ता[2] शतपर्विका[3] ॥२५८॥
हरिताली[4] रुहा[5] पोटगल[1]स्तु धमनो[2] नडः[3] ।
कुरुविन्दो[1] मेघनामा[2] मुस्ता[3] गुन्द्रा[1] तु सोत्तमा ॥२५९॥
वल्वजा[1] उलपो[2] ऽथेक्षुः[1] स्याद्रसालो[2] ऽसिपत्रकः[3] ।
[(5)] भेदाः[1] कान्तार[1]-पुंड्रा-द्या स्तस्य मूलं तु मोरटम्[1] ॥२६०॥
काश[1]स्त्विषीका[2] घासः[1] यवसं[2] तृणं[1] मर्ज्जुनम्[2] ।

---

(२) "कोशातकी शतच्छिद्रा जालिनी क्षतवेधना, मृदङ्गफलिका क्ष्वेडा धराटाली कर्कशच्छदा" इति ॥

(३) कर्कट्यां स्यादिर्वारुर्वारुवत् उर्वारुरुर्वारुरपि एर्वारुश्चिर्भिटी तथा । चिर्भिटं चिर्भिट स्वद्वत् वालुङ्कः स्याद्वालुङ्क्यपि । त्रपुसी त्रपुषी त्रपुसं त्रपुषम् इति शब्दभेदेनाममाला ॥

(४) पुंसि बर्हिषौ बर्हिषः क्लीबे बर्हिषी बर्हींषि ॥

(५) ऽस्य भेदा जातयः कान्ताराद्याः एकादश ॥

विषः[१] क्ष्वेडो[२] रस[३]स्तीक्ष्णं[४] गरलो[५](१)ऽथ हलाहलः[१] ॥२६१॥
वत्सनाभः[२] कालकूटो[३] ब्रह्मपुत्रः[४] प्रदीपनः[५]।
सौराष्ट्रिकः[६] शौल्किकेयः[७] काकोलो[८] दारदोऽपि[९] च ॥२६२॥
अहिच्छत्रो[१०] मेषशृङ्गः[११] कुष्ठ[१२]-वालुक[१३]-नन्दनाः[१४]।
कैराटको[१५] हैमवतो[१६] मर्कटः[१७] करवीरकः[१८] ॥२६३॥
सर्षपो[१९] मूलको[२०] गौराद्रकः[२१] सक्तुक[२२]-कर्दमौ[२३]।
अङ्कोल्लसारः[२४] कालिङ्गः[२५] शृङ्गिको[२६] मधुसिक्थकः[२७] ॥२६४॥
इन्द्रो[२८] लाङ्गलिको[२९] विस्फुलिङ्ग[३०]-पिङ्गल[३१]-गौतमाः[३२]।
मुस्तको[३३] दालव[३४]श्चेति स्थावरा विषजातयः(२) ॥२६५॥
(३)कुरण्टाद्या अग्रबीजा[१] मूलजा उत्पलादयः[२]।
पर्व्वयोनय इक्ष्वाद्याः[३] स्कन्धजाः सल्लकीमुखाः[४] ॥२६६॥
शाल्यादयो बीजरुहाः[५] सम्मूर्छजा स्तृणादयः[६]।
स्युर्वनस्पतिकायस्य षडेता मूलजातयः ॥२६७॥

इति वनस्पतिकायः।

---

## द्वीन्द्रियाः।

गोलकुः[१] कृमि[२] रक्तकर्णः क्षुद्रः कीटो[१] बहिर्भवः।

---

(१) स्थावरविषजातीनामेकैकम् ॥

(२) विषभेदाः सर्व्वे पुं क्लीबलिङ्गाः इति वाचस्पतिः। पुंसि क्लीबे काकोलेत्याद्यमरोऽपि ॥

(३) वृक्षादिजातिविशेषानाह ॥

पूतका[1]स्तूभयेऽपि(१)[4] स्युः कीकसाः[1] कृमयोऽथ वः ॥२६८॥
काष्ठकीटो[1] घुणो[2], गण्डूपदः[1] किञ्चुलकः[2] कुसूः[3] ।
भूलता[4], गण्डूपदी[1] तु शिल्ली[2] स्यात[1] जलौकसः[2] ॥२६९॥
जलालोका[3] जलूका[4] च जलौका[5] जलसर्पिणी[6] ।
मुक्तास्फोटो[1]ऽब्धिमण्डूकी[2] शुक्तिः[3] शङ्ख[1]स्तु वारिजः[2] ॥२७०॥
त्रिरेखः[3] षोडशावर्त्तः[4] शङ्खो[1]ऽथ क्षुद्रशङ्खकाः[1] ।
शङ्खनकाः[2] क्षुल्लकाः[3] स्युः शम्बूका[1] जलशुक्तयः[2] ॥२७१॥
कपर्द[1] स्तु हिरण्यः[2] स्यात् चराचरक[3]-वराटकौ[4] ।

इति द्वीन्द्रियाः ।

## त्रीन्द्रियाः ।

दूर्नामा[1] तु दीर्घकोशी[2] पिपीलक[1] स्तु पीलकः[2] ॥२७२॥
पिपीलिका[1] तु हीनाङ्गी[2] ब्राह्मणी[1] स्थूलशीर्षिका[2] ।
घृतेली[1] पिङ्गकपिशा[2]ऽथोपजिह्वो[1]पदेहिका[2] ॥२७३॥
वम्रुर[3] पदीका[4], लिक्षा[1] तु रिक्षा[2], यूका[1] तु षट्पदी[2] ।
गोपालिका[1] महाभीरु[2], गोमयोत्था[1] तु गर्दभी[2] ॥२७४॥
मत्कुण[1]स्तु कोलकुण[2] उद्दंशः[3] किटिभोत्[4]कुणौ ।
इन्द्रगोप[1]स्त्व ग्निरजो[2] वैराट[3]स्तित्तिभो[4]ऽग्निकः[5] ॥२७५॥
कर्णजलौका[1] तु कर्णकीटा[2] शतपदी[3] च सा ।

इति त्रीन्द्रियाः ।

---

(१) उभये अन्तर्भवा बहिर्भवाश्च ॥

## चतुरिन्द्रियाः।

ऊर्णनाभ[1] स्तन्तुवायो[2] मालिको[3] जालकारकः[4] ॥२७६॥
कृमि[5] र्मर्कटको[6] लूता[7] लालास्रावो[8]ऽष्टपा[9]च्च सः।
वृश्चिको[1] द्रुण[2](1) आल्या[3]लि[4]रलं[1] तत्पुच्छकण्टकः ॥२७७॥
भ्रमरो[1] मधुकृद्[2] भृङ्ग[3] श्चञ्चरीकः[4] शिलीमुखः[5]।
इन्दिन्दिरो[6]ऽली[7] रोलम्बो[8] द्विरेफो[9]ऽस्य षडंह्रयः(2)॥२७८॥
भोज्यमस्तु पुष्प[1]-मधुनी[2](3) खद्योतो[1] ज्योतिरिङ्गणः[2]।
पतङ्गः[1] शलभः[2](4) क्षुद्रा[1] सरघा[2] मधुमक्षिका[3] ॥२७९॥
(5)माक्षिकादि तु मधु स्यान्मधुच्छिष्टं[1] तु सिक्थकम्[2]॥
वर्वणा[1] मक्षिका नीला पुत्तिका तु पतङ्गिका[2] ॥२८०॥
वनमक्षिका तु दंशो[1] दंशी[1] तज्जाते रल्पिका।
तैलाटी[1] वरटा[2] गन्धोली[3] स्याज्झीरी[1] तु चीरुका[2] ॥२८१॥
झिल्लीका[3] झिल्लिका[4] वर्षकरी[5] भृङ्गारिका[6] च सा।

द्वित्रिचतुरिन्द्रियाः सम्पूर्णाः।

---

(1) आलमनर्थमस्यास्तीत्याली आलं स्यादनर्थ हरितालयोरित्य-नेकार्थः, आलिनौ आलिनः। आली आलयः॥

(2) यौगिकशब्दनिष्पत्त्यर्थमिदम्। तेन षडंह्रिः। षट्पदः इत्यादि॥

(3) पुष्पलिट् पुष्पन्धयः, मधुलिट् मधुधयः, मधुव्रतः इत्यादि सिध्यति॥

(4) 'शलभशब्दः तिड्डपर्यायोऽपि' यद्देशिसूत्रं तिड्डोसलहम्मि सङ्घा इति शलभः पिशाचश्च इति तट्टीका शलभच्छायमित्यत्र तिड्डानां कायेत्यर्थः॥

(5) माक्षिकं यौगिकत्वादादिशब्दाच्च क्षौद्रं सारघम्, मक्षिका-भ्रमराद्यौ स्यात् इत्युक्तेरपि॥

## तिर्यक्काण्डः ।

पशु[१]स्तिर्यङ्[२]चरि[३]र्हिंस्रे ऽस्मिन् व्यालः[१] श्वापदो[२]ऽपि च ॥१२८२

हस्ती[१] मतङ्गज[२]-गज[३]-द्विप[४]-कर्य[५]-नेकपाः[६]

मातङ्ग[७]-वारण[८]-महामृग[९]-सामयोनयः[१०(१)] ।

स्तम्बेरम[११]-द्विरद[१२]-सिन्धुर[१३]-नाग[१४]दन्तिनो[१५]

दन्तावलः[१६]करटि[१७]-कुञ्जर[१८]-कुम्भि[१९]-पीलवः[२०(२)] ॥१२८३॥

इभः[२१]करेणु[२२(३)] र्गजो[२३]ऽस्य स्त्री धेनुका[१]वशा[२]ऽपि च ।

भद्रो[१]मन्द्रो[१] मृगो[१]मिश्र[१]श्चतस्रो गजजातयः ॥१२८४॥

काले ऽप्य जातदन्तश्च स्वल्पाङ्गश्चापि मत्कुणौ[१] ।

पञ्चवर्षो गजो बालः[१]स्यात् पोतो[१] दशवर्षकः ॥१२८५॥

विक्को[१] विंशतिवर्षः स्यात् कलभ[१]स्त्रिंशदब्दकः ।

यूथनाथो[१] यूथपति[२]र्मत्तो[१] प्रभिन्न[२] गर्जितौ[१] ॥१२८६॥

मदोत्कटो[१]मदकलः[२] समा उद्दान्त[१]-निर्मदौ[२] ।

सज्जितः[१]कल्पित[२]स्तिर्यग्घाती परिणतो[१(४)] गजः ॥१२८७॥

व्यालो[१] दुष्टगजो[२]गम्भीरवेद्य[१(५)] वशताङ्कुशः[२] ।

राजवाह्य[१] स्तूपवाह्यः[२]सन्नाह्यः[१] समरोचितः[२] ॥१२८८॥

---

(१) सामयोनिः सामयोनी ॥

(२) पीलुः पीलू ॥

(३) करेणू करेणवः ॥

(४) तिर्यग्दन्तप्रहारस्तु गजः परिणतोमतः इति हलायुधः ॥

(५) "त्वग्भेदात्शोणितस्रावादामांसव्यथनादपि । संज्ञां न लभ
यस्तु गजो गम्भीरवेद्यसौ" इति वाग्भटम् ॥

उद्ग्रद[1]न्तीषादन्तो[2] वक्रगा घटना घटा[1] ।
मदो[1] दानं[2] प्रवृत्ति[3]श्च वमथुः[1] करशीकरः[2] ॥२८९॥
हस्तिनासा[1] करः[2] शुण्डा[3] हस्तो[4]ऽस्याग्रं तु पुष्करम्[1] ।
अङ्गुलिः[1] कर्णिका[2] दन्तौ[1] विषाणौ[2] स्कन्ध[1] आसनम्[2] ॥२९०॥
कर्णमूलं चूलिका[1] स्या दीषिका[1] त्वक्षिकूटकम् ।
अपाङ्गदेशो निर्य्याणं[1] गण्ड[1]स्तु करटः[2] कटः[3] ॥२९१॥
अवग्रहो[1] ललाटं[2] स्या दारचः[1] कुम्भयो रधः ।
कुम्भौ[1] तु शिरसः पिण्डौ कुम्भयो रन्तरं विदुः[1] ॥२९२॥
वातकुम्भ[1]स्तु तस्याधो वाहित्थ[1] तु ततो ऽप्यधः ।
वाहित्थाधः प्रतिमानं[1] पुच्छमूलं तु पेचकः[1] ॥२९३॥
दन्तभागः[1] पुरोभागः पक्षभाग[1]स्तु पार्श्वतः ।
पूर्व्वस्तु जङ्घादिदेशो गात्रं[1](1) स्यात् पश्चिमो ऽपरा[1] ॥२९४॥
विन्दुजालं पुनः पद्मं[1] शृङ्खलो[1] निगडो[2] ऽन्दुकः[3] ।
हिञ्जीर[4]श्च पादपाशो[5] वारि[1]स्तु गजबन्धभूः ॥२९५॥
त्रिपदी[1] गात्रयो(2)र्बन्ध एकस्मिन्नपरे ऽपि च ।
तोत्रं वेणुकं[2] मालानं[1] बन्धस्तम्भो ऽङ्कुशः[1] सृणिः[2] ॥२९६॥
अपष्ठं[1] त्वङ्कुशस्याग्रं यात[1]मङ्कुशवारणम् ।
निषादिनां पादकर्म्म यतं वीतं[1] तु तद्द्वयम् ॥२९७॥

---

(1) गच्छत्यनेन गात्रं स्त्रियां गात्रा अपरभागे भवत्वादपरा क्लीबे अपरं जङ्घादित्वाद्गत्वे वरा ॥

(2) गात्रयोरिति द्वयोः पूर्व्वजङ्घयोः एकस्मिन् अपरे इति एकस्यापश्चिमजङ्घां च अपराशब्दस्य स्त्री क्लीबत्वात् अपरे इति सप्तमी ॥

कक्ष्या[१] दूष्या[२] वरत्रा[३] स्यात् कण्ठबन्धः[१] कलापकः[२] ।
घोटक[१]स्तुरग[२]स्तार्क्ष्य[३]स्तुरङ्गो[४]ऽश्व[५]स्तुरङ्गमः[६] ॥२९८॥
गन्धर्वो[७]ऽर्वा[८](१) सप्ति[९]-वीति[१०] र्वाहो[११] वाजी[१२] हयो[१३] हरिः[१४]
वडवा[१]ऽश्वा[२] प्रसू[३]र्भामी[४] किशोरो[१]ऽल्पवया हयः ॥२९९॥
जवाधिकस्तु जवनो[१] रथ्यो[१] वोढा रथस्य यः ।
आजानेयः[१] कुलीनः[२] स्यात् तद्देश्यास्तु(२) सैन्धवाः[१] ॥३००॥
वानायुजाः[१] पारसीकाः[१] काम्बोजा[१] वाह्लिका[१]-दयः ।
विनीतस्तु साधुवाही[१] दुर्विनीतस्तु शूकलः[१] ॥३०१॥
कश्यः[१] कशार्हो[२] हृदयावर्त्ती श्रीवत्सकी[१] हयः ।
पञ्चभद्र[१]स्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ॥३०२॥
पुच्छोरः खुरकेशास्यैः सितैः स्यादष्टमङ्गलः[१] ।
सिते तु कर्कः[१] कोकाहो[२] खोङ्गाहः[१] श्वेतपिङ्गले ॥३०३॥
पीयूषवर्णे सेराहः[१] पीते तु हरियो[१] हये ।
कृष्णवर्णे तु खुङ्गाहः[१] कियाहो[१] लोहितो हयः ॥३०४॥
आनीलस्तु नीलको[१]ऽथ त्रियूहः[२] कपिलो हयः ।
वोल्लाह[१]स्त्वयमेव(३) स्यात् पाण्डुकेसरवालधिः ॥३०५॥

---

(१) अर्वा अर्वाणौ अर्वाणः, अर्वाणम् इत्यादौ अनोऽस्य इत्यनेन जायमानाकारलोपे नयमन्तसंयोगात् इत्यनेन वसन्तसंयोगपरत्वाद् नकारस्य लोपाऽनुत्पत्तौ अर्व्वणः अर्व्वणा अर्व्वभ्यां सम्मतमेतत् अन्यमते तु अर्व्वणस्त्रसावनञ इति पाणिनीयसूत्रेण अर्व्वन्तौ अर्वः इत्यादि ॥

(२) स स देशो जन्मभूमिरेषाम् ।

(३) अयं त्रियूह एव ।

उराहस्तु मनाक् पाण्डुः कृष्णजङ्घो भवेद्यदि ।
सुरूहको[१]गर्दभाभो वोरुखान[१]स्तु पाटलः ॥ ३०६॥
कुलाहस्तु मनाक् पीतः कृष्णः स्याद्यदि जानुनि ।
उकनाहः[१]पीतरक्तच्छायः[(१)] स एव तु क्वचित् ॥३०७॥
कृष्णरक्तच्छविः प्रोक्तः शोणः[१] कोकनदच्छविः ।
हरिकः[१]पीतहरितच्छायः स एव हालकः[२] ॥३०८॥
पङ्गुलः[१] सितकाचाभो हलाह[१] श्चित्रितो हयः ।
ययु[१]रश्वोऽश्वमेधीयः[२]प्रोथ[१]मश्वस्य नासिका ॥३०९॥
मध्यं कश्यं निगाल[१]स्तु गलोद्देशः खुराः[१]शफाः[२] ।
अथ पुच्छं वालहस्तो[२]लाङ्गूलं[३] लूम[४(२)] वालधिः[५] ॥३१०॥
उपावृत्त[१]-परावृत्त[२]-लुठितानि[३] तु वेल्लिते[४] ।
धोरितं[१]वल्गितं[२]प्लुत[३]मुत्तेजितो[४]त्तेरितानि[५] च ॥३११॥
गतयः पञ्च धारा[१]-ख्या तुरङ्गाणां क्रमादिमाः[(३)] ।
तत्र धौरितकं[१]धौर्य्यं[२]धोरणं[३]धोरितं[४] च तत् ॥३१२॥
बभ्रु-कङ्क-शिखि-क्रोड-गतिवत्[१]वल्गितं[१] पुनः ।
अग्रकायसमुल्लासात् कुञ्चितास्यं नतत्रिकम्[२] ॥३१३॥
प्लुतं[१] तु लङ्घनं[२] पक्षि-मृग-गत्य-नुकारकम्[३] ।
उत्तेजितं[१]रेचितं[२]स्यान्मध्यवेगेन या गतिः[४] ॥३१४॥

---

(१) सं उकनाह एव ॥

(२) लूमशब्दो व्यञ्जननकारान्तः लूम लूमनी लूम्नि लूमानि अका-रान्तोऽपीति केचित् तन्मते लूमवालधीत्येकं पदम् लूमं लूमे लूमानि ॥

(३) क्रमात् बभ्र्वादिगतिवत् धौरितकादयो भवन्ति यथा बभ्रु-गतिवत् धौरितकम् ॥

उत्तेरित[1] मुपकण्ठ[2] मास्कन्दितक[3] मित्यपि ।
अतुश्रुत्योत्-श्रुत-गमनं कोपादिवाखिलैः पदैः[5] ॥३१५॥
आश्वीनो[1]ऽध्वा स यो ऽश्वेन दिनेनैकेन गम्यते ।
कवी[1] खलीनं[2] कविका[3] कवियं[4] मुखयन्त्रणम्[5] ॥३१६॥
पञ्चाङ्गी[1] वक्त्रपट्टं तु तलिका[1] तलसारकम्[2] ।
दामाञ्चनं[1(1)] पादपाशः[2] प्रक्षरं[1(2)] प्रखरः[2] समौ ॥३१७॥
चर्म्मदण्डे[1] कशा[2] रश्मौ[1] वल्गा[2]-वक्षेपण्यौ[3] कुशा[4] ।
पर्याणं[1] तु पल्ययनं[2] वीतं[1] फल्गु हयद्विपम् ॥३१८॥
वेसरो[1]ऽश्वतरो[2] वेगसर[3] श्चाथ क्रमेलकः[1] ।
कुलनाशः[2] शिशुनामा[3(3)] शलो[4] भोलि[5] र्मरुप्रियः[6] ॥३१९॥
मयो[7] महाङ्गो[8] वासन्तो[9] द्विककु[10]द्दुर्गलङ्घनः[11] ।
भूतघ्न[12] उष्ट्रो[13] दासेरो[14] रवणः[15] कण्टकाशनः[16] ॥३२०॥
दीर्घग्रीवः[17] केलिकीर्णः[18] करभ[1] स्तु त्रिहायणः ।
स तु शृङ्खलकः[1] काष्ठमयैः स्यात् पादबन्धनैः ॥३२१॥
गर्दभ[1] स्तु चिरमेही[2(4)] वालेयो[3] रासभः[4] खरः[5] ।
चक्रीवान्[6] शङ्कुकर्णो[7]ऽथ ऋषभो[1] वृषभो[2] वृषः[3] ॥३२२॥
माहेयः[4] सौरभेयो[5] भद्रः[6] शक्कर[7]-शाक्करौ[8] ।
उक्षा[9]ऽनड्वान्[10] ककुद्मान्[11] गौ[12] र्बलीवर्द[13] श्च शाङ्करः[14] ॥३२३॥

---

(१) पश्चात्पादबन्धनरज्जुः ॥

(२) अयंसन्नाहः "प्रक्षरं प्रखरोऽस्त्रियाम्" इति वैजयन्ती ॥

(३) शिशुनामानौ शिशुनामानः ॥

(४) चिरमेहिणौ चिरमेहिणः ॥

उक्षा तु जातो(१) जातोक्षः¹ स्कान्धिकः¹ स्कन्धवाहकः²।
महोक्षः¹ स्याद् वृद्धतरो² वृद्धोक्ष¹स्तु जरद्गवः² ॥२२४॥
षण्डतोचित आर्षभ्य¹ कूटो² भग्नविषाणकः²।
इट्चरो¹ गोपति²षण्डो³ गोवृषो⁴(२) मदकोहलः⁵ ॥२२५॥
वत्सः¹ शकृत्करि²स्तर्णो³ दम्य¹-वत्सतरौ² समौ।
नस्योतो¹ नस्तितः² प्रष्ठवाट्¹ तु स्याद्युगपार्श्वगः² ॥२२६॥
युगादीनां तु वोढारो युग्य¹-प्रासङ्ग्य²--शाकटाः³।
स तु सर्वधुरीणः¹ स्यात् सर्वां वहति यो धुरम् ॥२२७॥
एकधुरीणै¹-कधुरावु² भावे कधुरावहे।
धुरीण¹ धुर्य²-धौरेय³ धौरेयक⁴-धुरन्धराः⁵ ॥२२८॥
धूर्वहे⁶ऽथ गलि¹र्दुष्टवृषः² शक्तोऽप्यधूर्वहः।
गौरी¹ शष्य.² हष्ठवाह्लो¹ द्विदन्(३) षोडन् द्वि-षट्-रदौ² ॥२२९॥
वहः¹ स्कन्धोऽथ कूटं¹ तु ककुदं² नैचिकं¹ शिरः।
विषाणं¹ कूणिका² शृङ्गं³ सास्ना¹ तु गलकम्बलः² ॥२३०॥

---

(१) वाहनयोग्यतां प्राप्तः॥

(२) गोवृषो मदकोहलः इति वा॥

(३) द्विदन्तौ द्विदन्तः, षोड़न्तौ षोड़न्तः, द्विशब्दात् षट्शब्दाच्च रदो बोध्यते द्विदन् १ द्विरदः २। षोड़न् १ षट्‌रदः २। अन्ये तु दन्तस्य दत्रादेशे कृते षोड़न्निति शब्दान्तरं नकारान्तं राजन्शब्दवन्नियतलिङ्ग इति हैमबृहद्वृत्तिः, तदा षोड़ा षोड़ानौ षोड़ानः इत्यादि षोड़न् षड्दशनः स्मृतः इति हलायुधः, द्वौ षणौ षट्दशना दन्ता यस्य षोड़न् स्वार्थे कखौदयि प्रतादित्वात् षोड़त इति तु तट्टीका तदा देववत् षोड़न्तः षोड़न्तौ षोड़ताः इत्यादि॥

गौः[1] सौरभेयी[2] माहेयी[3] माता[4] सुरभि[5] रर्जुनी[6] ।
उस्रा[7]ऽघ्न्या[8] रोहिणी[9] शृङ्गिण्य[10] नड्वाह्य[11] नडुही[12] तथा[13] ॥३३१॥
तम्पा[14] निलिम्पिका[15] तम्बा[16] सा तु वर्णै रनेकधा ।
प्रष्ठौही[1] गर्भिणी[2] वन्ध्या[1] वशा[2] वेहत्[1(1)] वृषोपगा ॥३३२॥
अवतोका[1] स्रवद्गर्भा वृषाक्रान्ता तु सन्धिनी[1] ।
प्रौढवत्सा बष्कयिणी[1] धेनु[1] स्तु नवसूतिका ॥३३३॥
परेष्टु[1] र्बहुसूतिः स्यात् गृष्टिः[1] सकृत्प्रसूतिका ।
प्रजने काल्यो[1] पसर्य्या[2] सुखदोह्या तु सुव्रता[1] ॥३३४॥
दुःखदोह्या तु करटा[1] बहुदुग्धा तु वञ्जुला[1] ।
द्रोणदुग्धा[1] द्रोणदुघा[2] पीनोध्नी[1] पीवरस्तनी[2] ॥३३५॥
पीतदुग्धा[1] तु धेनुष्या[2] संस्थिता दुग्धबन्धके ।
नैचिकी[1] तूत्तमा गोषु पलिक्नी[1] बालगर्भिणी ॥३३६॥
समांसमीना[1] तु सा या प्रतिवर्षं विजायते ।
स्यादुच्चण्डी तु सुकरा[1] वत्सकामा[1] तु वत्सला[2] ॥३३७॥
चतुरब्दे हायणी[1(2)] त्र्येका द्वायन्ये[1] कादि-वर्षिका ।
आपीन[1] मूधो[2] गोविट्[1(3)] तु गोमयं[2] भूमिलेपनम्[3] ॥३३
तत्र शुष्के तु गोशकृत्[1]? करीषं[2]-छगणौ[3] अपि ।
गवां सर्वं गव्यं[1(4)] व्रजे गोकुलं[2] गोधनं[3] धनम्[4] ॥३३८॥

---

(१). वेहतौ वेहतः स्त्री ।

(२) चतुर्हायणी १ त्रिहायणी २ गोसंख्या देहायनादवयीति णी चतुस्त्रेर्हायनस्य वयसीति णत्वम् १ द्विहायनी १ एकहायनी २ ।

(३) जयती जयाति, गोविशौ गोविशः ।

(४) गोरादिकं "गव्यं गोसम्भवं सर्व्व" मिति हलायुधः ।

प्रजने[1] स्यादुपसरः[2] कोलः[1] पुष्पलकः[2](1) शिवः[3] ।
बन्धनं[1] दाम[2](2) सन्दानं[3] पशुरज्जु स्तु दामनी[1] ॥२४०॥
अजः[1] स्यात् छगलः[2] छाग[3] च्छगो[4] बस्तः[5] स्तभः[6] पशुः[7] ।
अजा[1] तु छागिका[2] भज्जा[3] सर्व्वभक्षा[4] गलस्तनी[5] ॥२५१॥
युवा ऽजो वर्करो[1] ऽवौ[1] तु मेषो[2]-र्णायु[3] र्हुडो[4]-रणाः[5] ।
उरभ्रो[6] मेषलको[7] दृष्णिरे[8] डको[9] रोमशो[10] हुडुः[11] ॥२४१॥
सम्फालः[12] शृङ्गिणो[13] भेड़ो[14] मेषी[1] तु कुररी[2] रुजा[3] ।
जालकिन्य[4] विला[5] वेण्य[6] येडिकः[1] शिशुवाहकः[2](3) ॥२४२॥
पृष्ठशृङ्गो[3] वनाज[4] स्या दविदुग्धे[1] त्व वेः परम्(4) ।
मोढं[2] दूसं[3] मरीसं[4] च कुक्कुरो[1] वक्रबालधिः[2] ॥२४३॥
अस्थिभु[3] ग्भषणः[4] सारमेयः[5] कौलेयकः[6] शुनः[7] ।
शुनिः[8] श्वामो[9] गृहमृगः[10] कुक्कुरो[11] रात्रिजागरः[12] ॥२४५॥
रसनालिट्[13] रतपराः(5) कौल[14]-शायि[15]-वणा[16]-न्दुकाः[17] ।
शालावृको[18] मृगदंशः[19] श्वा[20] ऽलर्कस्तु स रोगितः ॥२४६॥
विश्वकद्रु[1] स्तु कुशलो मृगव्ये सरमा[1] शुनी[2] ।

---

(१) पुष्कलको गन्धमृगे कीलके क्षपणेऽपि च इति श्रीधरः । पुष्कलक इत्यपि पाठः ॥

(२) दाम दाम्नी दामनी, दामानि क्ली, दामा दामानौ दामानः स्त्री ॥

(३) वनछाग इति यस्य नाम ॥

(४) अविकोढम् १ अविदूसम् २ अविमरीसम् ॥

(५) रतकीलः १ रतशायी २ रतव्रणः ३ रतान्दुकः ४ ॥

विड्वरः[१] सूकरे ग्राम्ये महिषो[१] यमवाहनः[२] ॥२४७॥
रजस्वलो[३] वाहरिपु[४] र्लुलायः[५] (लुलापः) सैरिभो[६] मह्[७] ।
धीरस्कन्धः[८] कृषाणङ्को[९] अरण्यो[१०] हंसभीरुकः[११] ॥२४८॥
रक्ताक्षः[१२] कासरो[१३] हंस कालीतनयः[१४]-लालिकौ[१५] ।
अरण्यजे ऽस्मिन् गवलः[१] सिंहः[१] कण्ठीरवो[२] हरिः[३] ॥२४९॥
हर्य्यक्षः[४] केसरी[५] भारिः[६] पञ्चास्यो[७] नखरायुधः[८] ।
महानादः[९] पञ्चशिखः[१०] पारिन्द्रः[११] पत्य[१२]-री[१३] मृगात्[(१)] ॥२५०॥
श्वेतपिङ्गो[१४] ऽथ व्याघ्रो[१] द्वीपी[२] शार्दूल[३]-चित्रकौ[४] ।
चित्रकायः[५] पुण्डरीक[६] स्तरक्षु[१]स्तु मृगादनः[२] ॥२५१॥
शरभः[१] कुञ्जराराति[२] रुत्पादको[३] ऽष्टपा[४] दपि ।
गवयः[१] स्या द्वनगवो[२] गोसदृक्षो[३] ऽश्ववारणः[४] ॥२५२॥
खड्गी[१] वाध्रीणसः[२(२)] खड्गो[३] गण्डको ऽथ किरः[१] किरिः[२] ।
भूदारः[३] सूकरः[४] क्रोडो[५] वराहः[६] क्रोडः[७]-पोत्रिणौ[८] ॥२५३॥
घोणी[९] दृष्टिः[१०] स्तब्धरोमा[११] दंष्ट्री[१२] किट्या[१३] स्तलाङ्गुली[१४] ।
आखनिकः[१५] शिरोमर्मा[१६] स्थूलनासो[१७] बहुप्रजः[१८] ॥२५४॥
भाल्लुके[१] भालूक[२]-र्क्ष[३]-च्छभल्ल[४]-भल्लूक[५]-भल्लुकाः[६] ।
शृगालो[१] जम्बुकः[२] फेरुः[३] फेरण्डः[४] फेरवः[५] शिवा[६] ॥२५५॥
घोरवासी[७] भूरिमायो[८] गोमायु[९] र्मृगधूर्त्तकः[१०] ।

(१) पारीन्द्रः इत्यपि इति टीका, सिंहे पारिन्द्र पारीन्द्रौ इति शब्दभेदः, मृगपति २ मृगारिः २ ॥

(२) वाध्रीव नासिकाऽस्य वाध्रीणसः [illegible] मत इति मता देशः ॥

स्यादञ्जनाधिका[१] हालि[२]रञ्जनिका[३] हलाहलः[४] ॥२६४॥
स्थूलाञ्जनाधिकायां तु ब्राह्मणी[१] रक्तपुच्छिका[२] ।
कृकलासस्तु[१] सरटः[२] प्रतिसूर्यः[३] शयानकः[४] ॥२६५॥
मूषिको[१] मूषको[२] वज्रदशनः[३] खनको[४]ऽन्दुरौ[५] ।
उन्दुरु[६]र्वृष[७] आखु[८]श्च सूक्ष्मास्यो[९] दृषलोचने[१०] ॥२६६॥
छुछुन्दरी[१] गन्धमूष्यां[२] गिरिका[१] बालमूषिका[२] ।
बिडाल[१]श्चोतु[२]र्मार्जारो[३] ह्रीकु[४]श्च वृषदंशकः[५] ॥२६७॥
जाहकी[१] गात्रसङ्कोची मण्डली[२] नकुलः[१] पुनः ।
पिङ्गलः[२] सर्पहा[३] बभ्रुः[४] सर्पो[१]ऽहिः[२] पवनाशनः[३] ॥२६८॥
भोगी[४] भुजङ्ग[५]-भुजगा[६] वुरगो[७] द्विजिह्व[८]-
व्यालो[९] भुजङ्गम[१०]-सरीसृप[११]-दीर्घजिह्वाः[१२] ।
काकोदरो[१३] विषधरः[१४] फणभृत्[१५] पृदाकु[१६]
र्दंष्ट्री[१७]-कुण्डलि[१८]-बिलेशय[१९]-दन्दशूकाः[२०] ॥२६९॥
दर्वीकरः[२१] कञ्चुकि[२२]-चक्रि[२३]-गूढ-
पात्[२४] पन्नगा[२५] जिह्मग[२६]-लेलिहानौ[२७] ।
कुम्भीनसा[२८]-शीविष[२९]-दीर्घपृष्ठाः[३०]
स्याद्राजसर्प[१]स्तु भुजङ्गभोजी[२] ॥२७०॥
चक्रमण्डल्य[१] अगरः[२] पारीन्द्रो[३] वाहसः[४] शयुः[५]
अलगर्दो[१] जलव्यालः[२] समौ राजिल[१]-डुण्डुभौ[२] ॥२७१॥
भवेत्तिलित्सो[१] गोनासो[२] गोनसो[३] घोणसो[४]ऽपि च ।
कुक्कुटाहिः[१] कुक्कुटाभो[२] वर्णेन च रवेण च ॥२७२॥
नागाः[१] पुनः काद्रवेया[२]स्तेषां (भोगवती) भोगावती[१] पुरी ।
शेषो[१] नागाधिपो[२]ऽनन्तो[३] द्विसहस्राक्ष[४] आलुकः[५] ॥२७३॥

स च श्यामोऽथवा शुक्लः सितपङ्कजलाञ्छनः ।
वासुकिस्तु सर्पराजः श्वेतो नीलसरोजवान् ॥२७४॥
तक्षकस्तु लोहिताङ्गः स्वस्तिकाङ्कितमस्तकः ।
महापद्मस्तु विशुक्लो दशबिन्दुकमस्तकः ॥२७५॥
शङ्खस्तु पीतो बिभ्राणो रेखां बिन्दुसितां गले ।
कुलिकोऽर्द्धचन्द्रमौलिर्ज्वालाधूमसमप्रभः ॥२७६॥
अथ कम्बलाश्वतर-धृतराष्ट्र-बलाहकाः ।
इत्यादयोऽपरे नागास्तत्तत्कुलसमुद्भवाः ॥२७७॥
निर्मुक्तो मुक्तनिर्मोकः सविषा निर्विषाश्च ते(1) ।
नागाः स्युर्दृग्विषा लूमविषास्तु वृश्चिकादयः ॥२७८॥
व्याघ्रादयो लोमविषा नखविषा नरादयः ।
लालाविषास्तु लूताद्याः कालान्तरविषाः पुनः ॥२७९॥
मूषिकाद्या दूषीविषं त्ववीर्यमौषधादिभिः(२) ।
कृत्रिमं तु विषं चारं गरश्चोपविषं च तत् ॥२८०॥
भोगोऽहिकायो दंष्ट्राऽऽशी(३) दर्वी भोगः फटः स्फुटः ।
फणोऽहिकोशस्तु निर्ल्वयनी निर्मोक-कञ्चुकाः ॥२८१॥

इत्यहिकायः ।



(1) विषेण सहिताः सर्पा नागादयः निर्विषा अजगरादयः ।

(२) यत् औषधमन्त्रप्रयोगादिभिः अवीर्यं भवति तद्दूषीविषमित्युच्यते ।

(३) आशिषो आशिषः स्तो दन्तालाः ।

विहगो[१] विहङ्गम[२]-खगौ[३] पतगो[४] विहङ्गः[५]
शकुनिः[६] शकुन्ति[७]-शकुनौ[८] वि[९]-वयः[१०](१) शकुन्ताः[११] ।
नभसङ्गमो[१२] विकिर[१३] पत्ररथौ[१४] विहायो[१५](२)
द्विज[१६]-पक्षि[१७]-विष्किर[१८]-पतत्रि[१९]-पतत्[२०] पतङ्गाः[२१](३) ॥३८२॥
पित्स[२२] न्नीडा[२३]-ण्डजो[२४] ऽगौका[२५](४) चञ्चु[१] चञ्चूः[२] त्रुपाटिका[३] ।
त्रोटि[४]श्च पत्रं[१] पतत्रं[२] पिच्छं[३] वाज[४] स्तनूरुहम्[५] ॥३८३॥
पक्षो[६] गरुत्[७] च्छद[८] श्चापि(५) पक्षमूलं तु पक्षतिः[१] ।
प्रडीनो[१] ड्डीन[२]-सण्डीन[३]-डयनानि[४] नभोगतौ ॥३८४॥
पेशी(६) कोशो[१] ऽण्डे[२] कुलायो[१] नीडे[२] केकी[१] तु सर्पभुक्[२] ।
मयूर[३]-बर्हिणौ[४] नीलकण्ठो[५] मेघसुहृत्[६] शिखी[७] ॥३८५॥
शुक्लापाङ्गो[८] ऽस्य वाक् केका[१] पिच्छं(७) बर्हं[२] शिखण्डकः[३] ।
प्रचलाकः[४] कलाप[५] श्च मेचकः[१] चन्द्रकः[२] समौ ॥३८६॥
वनप्रियः[१] परभृत[२] स्ताम्राक्षः[३] कोकिलः[४] पिकः[५] ।
कलकण्ठः[६] काकपुष्टः[७] काको[१]ऽरिष्टः[२] सकृत्प्रजः[३] ॥३८७॥

---

(१) स्त्रियां वी व्यौ व्यः, नदीवत् विः वी वयः, वयसी वयांसि क्ली ॥

(२) विहायाः विहायसौ विहायसः ॥

(३) पतन्नि नान्तः पतन् पतन्तौ पतन्तः ॥

(४) नीडजः १ अण्डजः २ अगौकाः सान्तः ॥

(५) गरुत् गरुतः पुं गरुती गरुन्ति क्ली ॥

(६) पेशी १ कोशः २ अण्डः ३ नामत्रयमित्यन्ये ॥

(७) पिच्छमिति विशेषणं तेन बर्हादि पञ्चाप्येव नामानीत्यन्ये ॥

